शुकतुण्डौ करौ कृत्वा वक्षस्यभिमुखाश्चितौ ।
[1]शनैरधोमुखाविद्धौ सोऽवहित्थ इति स्मृतः ।।१५६।।

दौर्बल्ये निःश्वसिते गात्राणां दर्शने तनुत्वे च ।
उत्कण्ठिते च तज्ज्ञैरभिनययोगस्तु [2]कर्त्तव्यः ।।१५७।।

---

अवहित्थकमाह– शुकतुण्डाविति ।

अभिमुखौ पूर्वाननावञ्चितौ वर्तनया अधोमुखौ सन्तावाविद्धावधोगमितौ । अवहित्थसूचकत्वादवहित्थः । एवं हि कुर्वन्नाशयमात्मीयं नो भिनत्ति ॥ १५६-१५७ ॥

---

## १२-अवहित्थ हस्त

अभिनव– अब अवहित्थ हस्त का लक्षण कहते हैं—शुकतुण्डौ इत्यादि ।

अनुवाद—यदि दोनों शुकतुण्ड हस्तों को वक्षःस्थल पर सामने से अञ्चित करके धीरे-धीरे अधोमुख आविद्ध कर दिया जाय तो 'अवहित्थ' हस्त होता है ॥ १५६ ॥

अनुवाद--नाटचविदों को दुर्बलता, निःश्वास, शरीर के प्रदर्शन, क्षीणता-दिखाने तथा उत्कण्ठा का भाव प्रदर्शित करने में इसका अभिनय करना चाहिए ॥ १५७ ॥

अभिनव—'अभिमुख का अर्थ है पूर्व मुख के आश्रित होना । वर्तना के द्वारा अधोमुख किये हुए आविद्ध अर्थात् अधोगामी होना । आकारगोपन की सूचना देने के कारण इसे 'अवहित्थ' कहते हैं । इस प्रकार अवहित्थ हस्त को करने वाला अपने आशय का भेदन नहीं करता है ॥ १५६–१५७ ॥

---

१. क-म. शनैरभिमुखाविद्धाववहित्थस्तु स स्मृतः ।
२. क. ग. अभिनययोगश्च कर्त्तव्यः ।
क, फ. अभिनययोगः प्रयोक्तव्यः ।

[1]मुकुलस्तु यदा हस्तः कपित्थपरिवेष्टितः ।
वर्धमानः स विज्ञेयः कर्म चास्य निबोधत ॥१५८॥

सङ्ग्रहपरिग्रहौ धारणं च समयश्च सत्यवचनं च ।
[2]संक्षेपतस्तु संक्षिप्तं निपीडितेनाभिनेतव्यम् ॥१५९॥

---

वर्धमानमाह—ज्ञेयो वै वर्धमानश्च हंसपक्षौ पराङ्मुखाविति ।

अन्योन्यं स्वस्तिकवदवस्थितौ लक्ष्ये तु अन्योन्यनिकटौ दृश्येते । स्वस्तिकता—हीनावेव केवलं पराङ्मुखौ परस्परचलनेन विस्तारयोगाद्वर्धमानत्वम् । आदिशब्देन वक्षःकवाटादि ॥ १५८-१५९ ॥

---

## १३—वर्धमान हस्त का लक्षण

अभिनव—अब वर्धमान हस्त का लक्षण कहते हैं—

अनुवाद—जब मुकुल हस्त को कपित्थ हस्त से परिवेष्टित कर दिया जाय तो 'वर्धमान' हस्त समझना चाहिए । अब उसके कर्म को समझिये ॥ १५८ ॥

अनुवाद—संग्रह, परिग्रह, धारण, समय, सत्यवचन, संक्षेप और सक्षिप्त का निपीड़न करने में इस हस्त का अभिनय करना चाहिए ॥ १५९ ॥

अभिनव—दो पराङ्मुख हंसपक्ष हस्तों को वर्धमान समझना चाहिए । परस्पर स्वस्तिक मुद्रा की तरह अवस्थित लक्ष्य में एक दूसरे के निकट दिखाई देते हैं । स्वस्तिकता से रहित केवल पराङ्मुख होकर चलने से विस्तारयुक्त हो जाते हैं, इसलिए इसमें वर्धमानत्व रहता है । आदि शब्द से वक्ष, कवाट आदि का ग्रहण होता है ॥ १५८-१५९ ॥

---

१. इतः श्लोकद्वयं 'क' पुस्तके नास्ति ।

२. एतौ द्वौ श्लोकौ कीर्तिधरपाठानुसारिणौ ।
क. संक्षेपः संक्षिप्तं ।

[1]ज्ञेयो वै वर्धमानस्तु हंसपक्षौ पराङ्मुखौ ।
जालवातायनादीनां प्रयोक्तव्यो [2]विघाटने ॥१६०॥
[3]उक्ता ह्येते द्विविधा ह्यसंयुताः [4]संयुताश्च संक्षेपात् ।
[5]अभिनयकरास्तु ये त्विह तेऽन्यत्राप्यर्थतः साध्या ॥१६१॥

---

उपसंहरन् सूचयति उक्ता ह्येत इति ।

यस्मादेते उक्ताः सङ्क्षेपमाश्रित्याभिनेयविषये निरूपिताः । तुरिति तस्मादन्यत्राप्युक्तात् अभिनेयात् अर्थादर्थान्तरेऽपि अर्थतोऽभिनयतः साध्यः साधयितुं शक्याश्चार्हाश्च । ( तुर्हेतौ, यस्मादाभिमुख्यतया, नार्थमाने करीति त्वदृष्टार्थमर्थेऽर्थतः ) ॥ १६०-१६१ ॥

---

अनुवाद—दो हंसपक्ष हस्त को पराङ्मुख उलटा करके रखा जाय तो 'वर्धमान' हस्त होता है। जाल ( झरोखा ) और वातायन ( खिड़की ) आदि के खोलने में इस हस्त का प्रयोग करना चाहिए ॥ १६० ॥

अभिनव—अब उपसंहार करते हुए सूचना देते हैं—'उक्ता' इत्यादि ।

अनुवाद—इस प्रकार संक्षेप में असंयुत और संयुत दो प्रकार के हस्तों को मैंने कहा है और जो अभिनय हस्त यहाँ पर कहे गये हैं वे अन्यत्र भी अर्थ (प्रयोजन) के अनुसार साध्य हैं अर्थात् उसे अन्यत्र भी अर्थों के अनुसार प्रयोग करना चाहिये ॥ १६१ ॥

अभिनव—क्योंकि ये हस्त पहिले कहे गये हैं अर्थात् संक्षेप का आश्रय लेकर अभिनेय के विषय में निरूपण किया गया है। 'तु' पद का अभिप्राय है उक्त अभिनेय अर्थ के अतिरिक्त अर्थान्तर में ( अन्य अर्थ में ) भी अभिनय से साध्य है अर्थात् सिद्ध करने योग्य है ॥ १६१ ॥

१. ख. विज्ञेयो ।
२. क-म. विघट्टने ।
३. ग. उक्ताश्चेते ।
४. ग. स्वसंयुक्ताः ।
५. ग. अभिनयकरा ये त्विह ते ।

अन्यैरप्युक्तम्—

आकृत्या चेष्टया चिह्नैर्जात्या विज्ञाय [1]तत्पुनः ।
स्वयं [2]वितर्क्यं कर्तव्यं हस्ताभिनयनं बुधैः ॥१६२॥

[3]नास्ति कश्चिदहस्तस्तु [4]नाट्येऽर्थोऽभिनयं प्रति ।
यस्य[5] यद् दृश्यते रूपं बहुशस्तन्मयोदितम् ॥१६३॥

---

एवमभिनयमभिधायाभिनयान्तरमप्यस्तीति वर्शयति—नास्ति कश्चिदिति ।
नाट्यमिह तदुपयोगिनो विभावादयः। अत्र हेतुः यस्य यद्दृश्यत इति ॥१६२॥

---

अनुवाद—आकृति, चेष्टा, चिह्न, जाति से जानकर और स्वयं वितर्क (तर्क) करके विद्वानों को हस्तों का अभिनय करना चाहिए ॥ १६२ ॥

अभिनव—इस प्रकार हस्तभिनय को कहकर अन्य अभिनय भी हैं, यह दिखाते हैं—'नास्ति कश्चिदिति' ।

अनुवाद— नाट्य में कोई ऐसा अर्थ ( पदार्थ ) नहीं है जो विना हस्त के हो सकता हो। जिस हस्त का जैसा स्वरूप देखा है उसे मैंने बहुत प्रकार से कहा है ॥ १६३ ॥

अभिनव—यहाँ पर 'नाट्य' पद का अर्थ है नाट्याभिनय के उपयोगी विभाव अनुभाव आदि। इसमें हेतु है—जिसका जैसा रूप देखा है उसे मैंने बहुत प्रकार से कहा है ॥ १६३ ॥

---

१. ख ते ह्यत्राप्यर्थतः ।
२. क-म. वस्तुतः ।
३. ख वितर्कात् ।
४. ख-ग. नास्ति कश्चित्तथा हस्तो ।
५. ख. नाट्यार्थाभिनयं प्रति ।
ग नाट्याभिनयनं प्रति ।
६. ग. यस्य संदृश्यते रूपं बहुशस्तन्मयोदितम् ।
क-म. दृश्यते बहुरूपस्तु येषां ते गदिता मया ।

अन्ये चाप्यर्थसंयुक्ता लौकिका[1] ये करास्त्विह ।
छन्दतस्ते [2]नियोक्तव्या रसभावविचेष्टितैः ॥१६४॥

---

एवमुक्तानामेवाभिनयानां साङ्कर्येण प्रयोगमनुज्ञायानुक्तमपि सङ्ग्रहीतुमाह—अन्ये चापीति ।

अर्थोऽभिनयसामर्थ्यं शोभातिशयः । छन्दत इति नाट्याचार्येच्छाप्रवाहानुसारीत्यर्थः । रसा स्थायिनः । भावाः सञ्चारिणः तत्सूचकानि यानि विचित्राणि सात्त्विकोपाङ्गानि तैः सह । एवं लोकधर्मीप्रदर्शने प्रसिद्धोदाहरणमात्रमभिनेयानां परिगणनमित्याख्येयम् ॥ १६४ ॥

---

अभिनव—इस प्रकार कहे हुए अभिनयों के साङ्कर्य से प्रयोग की अनुज्ञा देकर अनुक्त अभिनयों का सङ्ग्रह करने के लिए कहते हैं—

अनुवाद और अन्य भी जो अर्थों से संयुक्त लौकिक हस्त हैं उनका भी रस और भाव तथा उसके सूचक चेष्टाओं के साथ स्वेच्छानुसार प्रयोग करना चाहिए ॥ १६४ ॥

अभिनव—'अर्थ' का अभिप्राय है अभिनय-सामर्थ्य और शोभातिशय । 'छन्दतः' का अभिप्राय है नाट्याचार्य की इच्छा के प्रवाह के अनुसार । 'रस' से तात्पर्य है स्थायीभाव । 'भाव' से आशय है सञ्चारीभाव और उसके सूचक विचित्र सात्त्विक भाव और उसके उपाङ्ग, उनके साथ प्रयोग करना चाहिए । इस प्रकार लोकधर्मी इतिकर्त्तव्यता को दिखलाने के लिए प्रसिद्ध उदाहरणरूप अभिनेयों का परिगणन करना चाहिए ॥ १६४ ॥

---

१. क-म. ये ह्यन्ये लौकिका; कराः ।

२. क-ग. प्रयोक्तव्या ।

क-द. छन्दतस्तेऽपि योक्तव्यः ।

क-न. छन्दतस्तेऽपकर्त्तव्या ।

क-म छन्दतस्तेऽभिनेतव्याः ।

देशं कालं प्रयोगं [1]चाप्यर्थयुक्तिमवेक्ष्य च ।
हस्ता ह्येते प्रयोक्तव्याः [2]नृणां स्त्रीणां विशेषतः ॥१६५॥
सर्वेषामेव हस्तानां यानि कर्माणि सन्ति[3] हि ।
[4]तान्यहं संप्रवक्ष्यामि रसभावकृतानि[5] तु ॥१६६॥

---

देशः क्षेत्रविशेषः । प्रयोगः सुकुमारोद्धतरूपकविशेषः । अर्थस्य युक्तिरुपपत्तिः मुख्यगौणलाक्षणिकव्यङ्ग्यादिभेदेन । अवेक्ष्येति विचार्येत्यर्थः । प्रयोक्तव्या इति शक्यार्थे कृत्यः । विशेषत इति । पुरुषाणां तदपेक्षया सामान्या आचारा भवन्ति । अत एवोत्तमानामतिस्वल्पप्रचारो हस्ताभिनयः ॥ १६५ ॥

---

अनुवाद—देश, काल, प्रयोग और अर्थयुक्ति को देखकर पुरुषों के विशेष कर स्त्रियों के हस्तों का प्रयोग करना चाहिए ॥ १६५ ॥

अभिनव—'देश' का अर्थ है क्षेत्र विशेष । 'प्रयोग' का अभिप्राय है सुकुमार और उद्धत रूपक विशेष । 'अर्थयुक्ति' का आशय है अर्थ की युक्ति=उपपत्ति अर्थात् अर्थ-अभिधेय ( मुख्य ), गौण लाक्षणिक और व्यङ्ग्य आदि की उपपत्ति ( युक्ति ) । 'अवेक्ष्य' का अर्थ है विचार करके । 'प्रयोग करना चाहिए' ( प्रयोक्तव्या ) में शक्य अर्थ में कृत्य प्रत्यय है । 'विशेषतः' का तात्पर्य है पुरुषों के आचार स्त्रियों की अपेक्षा सामान्य होते हैं । अतएव उत्तम लोगों के हस्त के अभिनय में अति स्वल्प प्रचार होता है ॥ १६५ ॥

अनुवाद—अब मैं सभी हस्तों के रस और भावों से युक्त जो कर्म होते हैं उन सब को कहूँगा ॥ १६६ ॥

---

१. क-च. अर्थमुक्तिमवेक्ष्य च ।
२. ख. स्त्रीणां नृणां ।
क-म. स्त्रीणां नृणामथापि च ।
३. क-ग. सन्ति वै ।
४. क-म. तदहं ।
५ क-म. रसभावक्रियात्मकम् ।

उत्कर्षणं विकर्षणं तथा चैवापकर्षणम्[1] ।
[2]परिग्रहो निग्रहश्चाह्वानं नोदनमेव च ॥१६७॥
[3]संश्लेषश्च वियोगश्च रक्षणं मोक्षणं तथा ।
विक्षेपधूनने चैव [4]विसर्गस्तर्जनं तथा ॥१६८॥
छेदनं भेदनं चैव स्फोटनं मोटनं[5] तथा ।
[6]तोडनं चेति विज्ञेयं तज्ज्ञैः कर्म करान् प्रति ॥१६९॥

रसाभावकृतानीति । स्थायिसञ्चारिभेदेन तत्तद्विभावभेदवशादित्यर्थः । तथा हि केशानां विदूषकं प्रत्याकर्षणं खटकामुखेन, प्रियां प्रत्यरालेन, क्रीडायां कलहे च मुष्टिनेत्याद्युत्प्रेक्ष्यम् ॥ १६६ ॥

अभिनव—'रसभावकृतानि' से तात्पर्य है रस और भावों के अनुसार स्थायी और सञ्चारीभावो के भेदन से उन-उन विभावों के भेद के कारण हस्तकर्म होते हैं। जैसे विदूषक के प्रति केशों का आकर्षण ( खींचना ) खटकामुख हस्त से, प्रिया के प्रति बालों का आकर्षण अराल हस्त से और क्रीड़ा एवं कलह में बालों के खींचने का अभिनय मुष्टि हस्त के द्वारा होता है इत्यादि क्रियाओं की स्वयं उत्प्रेक्षा करनी चाहिए ॥ १६६ ॥

अनुवाद—उत्कर्षण ( ऊपर खींचना ), विकर्षण ( खींचना ), अपकर्षण (दूर खींचना ) परिग्रह ( ग्रहण ), निग्रह ( विनाश ), आह्वान ( बुलाना ), नोदन ( प्रेरणा पाठभेद से 'तोदन' अर्थात् व्यथन )' संश्लेष ( संयोग ), वियोग, रक्षण, मोक्षण, विक्षेप, धूनन ( कम्पन ) विसर्ग ( त्याग ), तर्जन ( फटकार ), छेदन, भेदन, स्फोटन ( विकसित करना ), मोटन ( सङ्कोचन ) और ताड़न इन्हें विद्वानों को हाथों का कर्म ( क्रियाएँ ) समझना चाहिए ॥ १६७ १६९ ॥

१. क-ग. तथा व्याकर्षणं पुनः । क-ज. तथा चाकर्षणं पुनः ।
२. ग. परिग्रहश्चाप्याह्वानं ताड़नं तर्जनं तथा ।
   ख. परिग्रहो निग्रहश्च आह्वानं नोदनं तथा ।
३. क-ड. संक्षेपश्च । क-म. संश्लेषोऽथ ।
४. ख, विसर्गस्तदनन्तरम् ।
५. क-प. तोटनं मोठनं चैव ताडनं मोटनं तथा ।
६. ख-ग. मोट्टनं तथा । ख-ग. चोटनं मोटनं तथा ।
७. क-प. स्फोटनं चैव ।

उत्तानः पार्श्वगश्चैव तथाऽधोमुख एव च ।
हस्तप्रचारस्त्रिविधो नाट्यतत्त्वसमाश्रयः ॥१७०॥

सर्वे [2]हस्तप्रचाराश्च प्रयोगेषु यथाविधिः ।
नेत्रभ्रूमुखरागाद्यैः[3] कर्तव्या[4] व्यञ्जिता बुधैः ॥ १७१ ॥

---

उर्ध्वाधोदूरगमनादन्यथाकरणमुत्कर्षणादि । परिग्रहो मण्डलेन ग्रहणम् । निग्रहो विनाशनं, तोदनं प्रेरणं ताडनमाहननं विक्षेपः सावज्ञे त्यागः धूननं कम्पनम् । विसर्गः सादरं त्यागः, स्फोटनं विकासनं, मोटनं सङ्कोचनं, इति प्रकारे । एवं प्रकारेण अन्येऽपि ॥१६७-१६९॥

---

अभिनव ऊपर, नीचे और दूर गमन से अन्य प्रकार का करण उत्कर्षण आदि है अर्थात् ऊपर खींचना उत्कर्षण, अलग खींचना विकर्षण है और खींचकर दूर ले जाना अपकर्षण है। मण्डल से ग्रहण करना परिग्रह है। 'निग्रह' का अर्थ विनाशन है। नोदन पाठान्तर-तोदन का अर्थ प्रेरणा है। ताड़न का अर्थ आहनन है। अवज्ञापूर्वक त्याग विक्षेप है। 'धूनन' का अर्थ 'कम्पन' है। 'विसर्ग' का अर्थ सादर त्याग है। 'स्फोटन' का अर्थ विकासन है। 'मोटन' का अर्थ सङ्कुचित करना या मोड़ना है। 'इति' का अर्थ प्रकार है। इस प्रकार और भी कर्म होते हैं ॥१६७-१६९॥

अनुवाद—नाट्यसिद्धान्त के अनुसार हस्तप्रचार तीन प्रकार का होता है—उत्तान, पार्श्वग और अधोमुख। इन सभी हस्त प्रकारों के प्रयोग के समय शास्त्रोक्त विधि के अनुसार नेत्र, भौंह और मुखराग के द्वारा विद्वानों को व्यक्त करना चाहिए ॥ १७०-१७१ ॥

---

१. श्लोकोऽयं ख-ग. पुस्तकयोर्नास्ति ।
२. क-न सर्वे हस्तप्रकारास्तु ।
   क-म. सर्वहस्तप्रचारास्तु ।
३. ख. रागैश्च ।
४. क-ङ. कर्तव्यं जीवितं बुधैः ।
   क-ज. कर्तव्या व्यञ्जितमुखैः ।
   क-म. कर्तव्या रञ्जिता बुधैः ।

[1]करणं कर्मस्थानं [2]प्रचारयुक्तिं क्रियां च [3]संप्रेक्ष्य ।
हस्ताभिनयस्तज्ज्ञैः [4]कार्यो [5]लोकोपचारेण ॥ १७२ ॥

रसभावकृतानीति यदुक्तं तत्स्पष्टयितुमाह सर्वे नेत्रभ्रूमुखरागाद्यैर्व्यञ्जिताः कार्या इति । प्रचार उर्ध्वोद्वर्तनपार्श्वाधोमुखादिः । परोक्षाभिनये दृष्ट्यादयो हस्तानामनुगताः । प्रत्यक्षे तु विपर्ययः ॥ १७०-१७१ ॥

एतत्सर्वमुपसंहरति करणमिति ।

करणमावेष्टितादि, कर्म विधेयं स्थानं ललाटादिक्षेत्रं उत्तानादिसन्निवेशस्थितिश्च, प्रचारः स्वल्पादिः युक्तिमुख्यगौणाद्युपपत्तिः, न हि 'गौरयं ब्राह्मण' इत्यत्र मृगार्थो हरिणाभिनयेन कर्तरीमुखमृगशीर्षक प्रायेणाभिनीयते । अपि तु मौर्ख्याभिनये, चतुरशुकतुण्डशिखरनिषधप्रायेण । युक्तिश्च विशेषणविशेष्यभावादिविचारः । तद्यथा तद्गुणसंविज्ञाने बहुव्रीहौ वृत्तिपदार्थान्यपदार्थाः अभिनेयाः, सपुलकस्वेदोद्गमो-

अभिनव—'रसभाव कृतानि' यह जो कहा गया है उसे स्पष्ट करने के लिये कहते हैं—सभी प्रकारों को नेत्र, भौंह और मुखराग से व्यक्त करना चाहिए । 'प्रचार' का अर्थ है ऊर्ध्व, उद्वर्त्तन, पार्श्व, अधोमुख आदि । परोक्ष अभिनय में दृष्टियों को हस्त के अनुगत रखना चाहिए और प्रत्यक्ष अभिनय में उसके विपरीत अर्थात् प्रतिकूल क्रम रहेगा ॥ १७०-१७१ ॥

अभिनव –इन सबका उपसंहार करते हैं—'करणमित्यादि' ।

अनुवाद—करण, कर्म-स्थान, प्रचार, युक्ति और क्रिया को देखकर लोक व्यवहार के अनुसार अभिनय विशेषज्ञ विद्वानों को हस्त का अभिनय करना चाहिए ॥ १७२ ॥

१. क-म. पुस्तके "करणं कर्मसंस्थानं प्रयोगं युक्तितः क्रियाम् ।
संलक्ष्य हस्ताभिनयः कार्यो लोकोपचारतः" इति पाठो दृश्यते ।
२. ख. ग. प्रकारयुक्ति ।
३. क–ग. समवेक्ष्य ।
४. क–ग. कार्यस्तज्ज्ञैः ।
५. क–ङ. लोकोपकारेण ।

कम्पयेति (रत्ना० १-१)। उपलक्षणविमुक्ते त्वन्यपदार्थमात्रं, तत्राप्युपलक्षणताप्रपत्त्यै वृत्तिपदार्थोऽप्यभिनेयः। स त्वनावेश इति तूपाध्यायाः। क्रिया त्रिधा विधिनिषेधानुभयरूपा। गच्छ मा गच्छेत्यादौ विधौ हि प्रत्ययार्थस्यैव, निषेधे चार्थस्यैव, अनुभयरूपे प्रकृत्यर्थस्यैव। 'अवतरत्वार्य' इत्यादौ तु न विधिः, अपि तु प्रकृत्यर्थमात्रं प्रदर्शयितव्यम्। लोटा तु स्वाभिप्रायमात्रं प्रकाश्यमानमप्रधानमिति प्रकृत्यर्थ एवाभिनेयः। अत्र व्यापकं हेतुमाह लोकोपचारेणेति ॥ १७२ ॥

**अभिनव**—'करण' का अर्थ है आवेष्टित आदि क्रियाएँ। 'कर्म' का अर्थ है विधेय ( कर्त्तव्य )। 'स्थान' का अभिप्राय है ललाट आदि प्रदेश और उत्तान आदि का सन्निवेश एवं स्थिति। 'प्रचार' का अर्थ है स्वल्प आदि। 'युक्ति' का तात्पर्य है अर्थ के विषय में गौण-मुख्य आदि की उपपत्ति। 'यह ब्राह्मण गौ है' यहाँ पर पशुरूप अर्थ का कर्त्तरीमुख एवं मृगशीर्ष का प्रायः अभिनय नहीं होता। अपितु इस प्रकार की मूर्खता के अभिनय में चतुर, शुकतुण्ड, शिखर, निषध हस्तों का प्रायः प्रयोग होता है। विशेषण-विशेष्य-भाव आदि का विचार करना 'युक्ति' है। जैसे तद्गुण संविज्ञान बहुव्रीहि में बृत्तिघटक पदार्थ तथा अन्य पदार्थ का अभिनय करना माहिए। जैसे—'सपुलकस्वेदोद्गमोत्कम्पया' (रत्ना० १।१) यहाँ पर पुलक (रोमाञ्च) स्वेद (पसीने) का निकलना और उत्कम्पन आदि वृत्तिघटक व्यापारों का अभिनय और पुलक (रोमाञ्च) आदि से युक्त व्यक्ति का भी अभिनय होता है। उपलक्षण से विमुक्त होने पर तो केवल अन्य पदार्थ का अभिनय होता है। उसमें भी उपलक्षणता की प्रतिपत्ति के लिए वृत्ति पदार्थ का अभिनय करना चाहिये। किन्तु वह अभिनय आवेश रहित होना चाहिए, यह हमारे उपाध्याय जी का मत है। क्रिया तीन प्रकार की होती है—विधिरूपा, निषेधरूपा और अनुभयरूपा। 'जाओ, मत जाओ' इत्यादि में विधि में प्रत्ययार्थ का अभिनय होता है, निषेध में अर्थ का और अनुभयरूपा क्रिया में केवल प्रकृत्यर्थ का अभिनय होता है। 'अवतरतु, आर्य !' इत्यादि में तो विधि नहीं, अपितु केवल प्रकृत्यर्थ ही प्रदर्शन करना चाहिए। 'लोट्' लकार में प्रत्यय से केवल अपने अभिप्राय का प्रकाशन होता है, विधि अप्रधान है अतः प्रकृत्यर्थ का ही अभिनय करना चाहिये। इसके व्यापक हेतु को कहते हैं कि ऐसा लोकोपचार अर्थात् लोकव्यवहार है ॥ १७२ ॥

[1]उत्तमानां कराः कार्या ललाटक्षेत्रचारिणः ।
[2]वक्षःस्थाश्चैव मध्यानामधमानामधोगताः ॥ १७३ ॥

करणं कर्मेत्यत्र स्थानमुक्तम् । तद्विभजत्युत्तमानामिति ।

उत्तमे सुवर्णादिद्रव्ये सन्निकृष्टाः । मध्यमे मध्यमाः । अधमे विप्रकृष्टाः । ललाटादिशब्दानामुपलक्षणार्थत्वादिति केचित् । एतेषु क्षेत्रेषु वर्तनानिवेशपूर्वकमुत्तमादयो राजामात्यविदूषकादयोऽभिनयान् यथोचित एवाभिनयस्थाने कुर्युरित्यनेनोत्तमा देवतागुरुनृपादयो यदा निर्दिश्यन्ते तदा ललाटक्षेत्रचारिभिः अञ्जल्यादिहस्तैः, मध्यमास्तु चतुरादिभिर्वक्षक्षेत्रचरैः, अधमाः शुकतुण्डाद्यैरधःक्षेत्रचरैः । तेन चन्द्रतारादिदर्शनेऽधमस्यापि ललाटक्षेत्रचरा हस्ता इत्यादि न विरुद्धमिति । इदं च युक्ततरमित्युपाध्यायाः—ये चतुरारालाद्यैः सत्यानृतगाम्भीर्यशौण्डीर्यादिविरुद्धविषया उक्तास्तेषां विभागार्थमिदं वचनम् । ये धान्यादय उत्तमा अर्थास्तेषामभिनये ललाटक्षेत्रगत्वमित्यादिक्रमेण ॥ १७३ ॥

अभिनव—हस्ताभिनय के प्रसङ्ग में करण और कर्म को कह दिया गया है। अब स्थान और उनका विभाजन करते हैं—'उत्तमानाभित्यादि'।

**अनुवाद—उत्तम पात्रों के हस्तों को मस्तक प्रदेश के समीप, मध्यम पात्रों के हस्तों को वक्षःस्थल के समीप और अधम पात्रों के करों को अधोभाग में रखना चाहिए ॥ १७३ ॥**

अभिनव—उत्तम अर्थात् सुवर्णादि द्रव्य में सन्निकृष्ट, मध्यम में मध्यम और अधम में विप्रकृष्ट हस्तों का अभिनय होता है। लोटादि शब्द यहाँ उपलक्षण है, ऐसा कुछ लोग कहते हैं। इन ललाट, वक्ष आदि क्षेत्रों में वर्त्तना के निवेश के साथ उत्तमादि राजा, आमात्य, विदूषक आदि यथोचित अभिनय स्थान पर अभिनयों को करें। इससे यह बताया गया है कि देवता, गुरु, नृप, आदि उत्तम पुरुष जब अभिनय करें तब ललाट क्षेत्रचारी अञ्जलि आदि हस्तों से, अमात्य आदि मध्यम पात्र वक्षःक्षेत्रचारी चतुर आदि हस्तों से तथा विदूषक आदि अधम पात्र अधःक्षेत्रचारी शुकतुण्ड आदि हस्तों से अभिनय करें। इससे यह सूचित होता है कि

१. क–म. कार्या करा ह्युत्तमानां ।
२. क–प. मध्यानामखिलानां च वक्षो नाभिगतास्तथा ।

ज्येष्ठे[1] स्वल्पप्रचाराः स्युर्मध्ये मध्यविचारिणः[2] ।
अधमेषु [3]प्रकीर्णाश्च हस्ताः कार्याः प्रयोक्तृभिः ॥ १७४ ॥

---

अभिनयगतं विशेषान्तरमप्याह ज्येष्ठे स्वल्पप्रचाराः स्युरित्यादि ।

प्रयोगे ज्येष्ठे नाटकादौ चतुर्वर्गोपायोपदेशिनि प्रत्यक्षताप्राधान्यादल्पो हस्ताभिनयो, मध्यमे तु रञ्जनाफले भाणकादौ मध्यमः प्रत्यक्षे हि तत्राकाशभाषितप्राधान्यात् । अधमे तु नृत्तकाव्ये षिद्गकादौ च प्रकीर्ण इति केचित् । एतत्त्वव्यवस्थितत्वादयुक्तम् । नाटकेऽपि भूयस्त्वमस्य । परस्थस्याभिनेयत्वे उत्तमपात्रेण तु प्रधान एवाभिनयः कार्यो न विशेषणम्, अस्मिन्नाट्ये गृहीतविशेषणा विशेष्यधीरिति मन्यमाना एतदमृष्यन्तोऽन्ये त्वाहुः—यत्र पदार्थसमुदायो ह्येकेनाभिनयेन शक्यप्रतिपत्तिरनेकेन वा चलत्वात् । तद्यथा—

---

चन्द्रमा, तारा आदि के दर्शन के समय अधम व्यक्ति के भी हाथ ललाट क्षेत्रचारी होते हैं, इत्यादि बचन विरुद्ध नहीं है । हमारे उपाध्याय जी कहते हैं कि यह अत्यन्त युक्त है कि जो चतुर एवं अराल आदि हस्त सत्य के विरुद्ध अनृत (झूठ) और गाम्भीर्य के विरुद्ध शौण्डीर्यादि विषय कहे गये है उनके विभाग के लिए यह कथन है। जो धान्य आदि उत्तम पदार्थ हैं उनके अभिनय में ललाट क्षेत्रचारी हस्त होने चाहिए, इत्यादि क्रम है ॥ १७३ ॥

**अभिनव**—अभिनयगत अन्य विशेषताओं को भी कहते हैं–'ज्येष्ठ में स्वल्प हस्त प्रचार हों, इत्यादि ।

**अनुवाद—नाट्य-प्रयोक्ताओं को ज्येष्ठ अभिनय में हस्तों का स्वल्प प्रचार होना चाहिए, मध्य-अभिनय में मध्य प्रचार और अधमों में प्रकोर्ण प्रचार वाले हस्तों का प्रयोग करना चाहिये ॥ १७४ ॥**

**अभिनव**—धर्म, अर्थ, काम, मोक्ष रूप चतुर्वर्ग का उपदेश देने वाले ज्येष्ठ नाटक आदि के प्रयोग में प्रत्यक्ष को प्रधानता होने के कारण स्वल्प हस्ताभिनय करे, रञ्जक फल वाले मध्यम भाण आदि के प्रयोग में मध्यम हस्ताभिनय करे, क्यों कि प्रत्यक्ष होने पर भी यहाँ आकाशभाषित की प्रधानता है । अधम नृत्तकाव्य षिद्गक

---

१. क. मध्ये कुर्वीत मध्यमैः ।

२. क-ड. ज्येष्ठेष्वल्पप्रचाराः ।

३. ख. प्रकीर्णास्तु ।

या स्रष्टुः सृष्टिराद्या वहति विधिहुतं या हविर्या च होत्री।
ये द्वेकालं विधत्तः श्रुतिविषयगुणा स्थिता व्याप्य विश्वम्।
यामाहुः सर्वबीजप्रकृतिरिति यया प्राणिनो प्राणवन्तः।
प्रत्यक्षाभिः प्रपन्नस्तनुभिरवतु वस्ताभिरष्टाभिरीशः।

(अभि० १।१) इत्यत्र।

तत्रैक एव जलहुताशनाभिनय उत्तमेन प्रयोज्यः। अधमेन त्वनेकश्च चलस्वभावत्वात्। मध्यमेन मध्यम इति प्रचारो वर्तना योत्तमेऽल्पेति वा। एतत्तु शोभाविच्युतिकारित्वात्, "अथ नयनसमुत्थं" (रघु० २-७५) इत्यादौ प्रयत्नोपहृतस्य पदार्थे वाक्यरचनमित्यस्य प्रौढत्वस्याभिनये नानुसरणप्रसङ्गान्नाद्रियते।

---

आदि में प्रकीर्ण हस्त का अभिनय करे, ऐसा कुछ लोग कहते हैं, किन्तु अव्यवस्थित होने के कारण यह युक्तिसंगत नहीं है। क्योंकि नाटकों में भी इसका (हस्ताभिनय का) बाहुल्य देखा जाता है। दूसरे में रहने वाले अभिनेयता में उत्तमपात्र के द्वारा प्रधान का ही अभिनय करना चाहिए, ताकि विशेषण (अप्रधान की) इस नाट्य में 'विशेषणों का ज्ञान करके ही विशेष्य की बुद्धि होती है' इस सिद्धान्त को मानने वाले पूर्वोक्त कथन को सहन न करते हुए कहते हैं कि जहाँ पर पदार्थ समुदाय अभिनेय है वहाँ पदार्थ समुदाय का एक ही अभिनय से समझा जा सकता है अथवा अनेक अभिनय से? क्योंकि वह चल है। जैसे —

या स्रष्टुः सृष्टिराद्या वहति विधिहुतं या हविर्या च होत्री।
ये द्वे कालं विधत्तः श्रुतिविषयगुणा स्थिता व्याप्य विश्वम्॥
यामाहुः सर्वबीजप्रकृतिरिति यया प्राणिनः प्राणवन्तः।
प्रत्यक्षाभिः प्रपन्नस्तनुभिरवतु वस्ताभिरष्टाभिरीशः॥ (अभि० १।१)

अभिनव—यहाँ पर उत्तम पात्र के द्वारा जल, हुताशन (अग्नि) आदि पदार्थ समुदाय का एक ही अभिनय प्रयोज्य है। अभिनयों के चल स्वभाव होने के कारण अधम के द्वारा अनेक अभिनय प्रयोज्य हैं, मध्यम के द्वारा मध्यम अभिनय करणीय है। प्रचार का अर्थ वर्त्तना है जो उत्तम पात्र में अल्प होती है। किन्तु यह शोभा को विच्युत करने वाली है। 'अथ नयनसमुत्थ' (रघु० २।७५) इत्यादि में प्रयत्न से लाये गये पदार्थ में वाक्य की रचना का प्रौढ़ के अभिनय में अनुसरण का प्रसङ्ग न होने से आदरणीय नहीं है।

ये परिमितमभिनेयं गमयन्ति ते स्फुटमेवार्थस्य गमकाः। अर्थप्रकरणादेस्तत्र सुखेन सहायत्वात् अनन्तार्थजातव्यवच्छेदकत्वं हि क्लेशः। तादृशा उत्तमप्रकृतिषु हस्ताः। अधमास्तु यथावचनं श्लिष्टमाहुस्तथा प्रकीर्णभूयस्त्वमभिनेये सन्दिह्यमानस्याभिनयायत्तमुत्कर्षणं विकर्षणमित्यादि—एवं केचित्।

अपरे त्वाहुः प्रचारस्त्रिधा पञ्चधा च वक्ष्यते तत्रोत्तमस्य च फलत्वादेकरस एवोत्तानादिकः प्रचारः, अधमस्य त्वतिसंकीर्ण इति। इदन्त्वत्र युक्ततमम्—ज्येष्ठेऽभिनये प्रत्यक्षवर्तमानात्मज्ञस्थविषये हस्तव्यापारोऽल्पः। इदन्त्वत्र युक्ततमम्—ज्येष्ठेऽभिनये प्रत्यक्षवर्तमानात्मज्ञस्थविषये हस्तव्यापारोऽल्पः। "हिअअ समस्सस" (शाकु० अ० ७) इत्यादौ। तथा "तन्वी मेघजलार्द्रवल्कलतया" (विक्रमो० ४।३८) इत्यादौ। अत्र हि सात्त्विकभूयस्त्वात् ज्येष्ठत्वम्। अप्रत्यक्षभाविभूतपरस्थरूपे तु सात्विकावकाशाभावोऽनावेशादिति तत्राधमोऽभिनयः, "सत्त्वहीनोऽधमः स्मृतः" (२२-२) इति वचनात्। तत्र विप्रकीर्णा विक्षिप्ता बहुलतमा हस्ताः। यथा कुञ्जरकसुन्दरकादीनां परस्थवृत्तयुद्धवर्णने। एतद्व्यतिरिक्ते तु मध्यमो हस्तप्रयोगः। यथा विदूषकेण प्रत्यक्षं दृश्यमाने नानावस्थावेशकारिणि उद्यानादिवर्णने॥ १७४॥

अभिनव—जो परमित अभिनय के गमक हैं वे स्फुट रूप में ही अर्थ के गमक होते हैं। उनमें अर्थ, प्रकरण आदि सुख से सहायक होते हैं और अपरमित अभिनेय है वहाँ अनन्त अर्थों के व्यवच्छेदन में क्लेश होता है। उसी प्रकार ही उत्तम प्रकृति के हाथ होते हैं। अधम तो यथावचन श्लिष्ट और प्रकीर्ण भूयस्त्व को कहते हैं। अभिनेय में सन्दिह्यमान अभिनय के अधीन पदार्थों का उत्कर्षण और विकर्षण होगा, इत्यादि। इस प्रकार कुछ लोगों कथन है।

अभिनव—अन्य लोग तो कहते हैं कि प्रचार के तीन और पांच भेदों को आगे कहेंगे। उनमें सफल होने से उत्तम का उत्तान आदि एक रस ही प्रचार है, अधम का तो अत्यन्त सङ्कीर्ण है। यह तो यहाँ अत्यन्त समीचीन है कि ज्येष्ठ अभिनय में प्रत्यक्ष अर्थात् वर्तमानकालिक प्रत्यक्षज्ञान के विषय में हस्ताभिनय अल्प होता है। जैसे 'हिअअ समस्सस' (हृदय समाश्वसिहि—शाकु० सप्तम अङ्क) इत्यादि में। और 'तन्वी मेघजलार्द्रवल्कलतया' (विक्रमो० ४।३८) इत्यादि में।

लक्षणव्यञ्जिता हस्ताः कार्यास्तूत्तममध्यमैः ।
[1]लोकक्रियास्वभावेन नोचैरप्यर्थसंश्रयाः[2] ॥ १७५ ॥
अथवान्यादृशं प्राप्य प्रयोगं कालमेव च ।
[3]विपरीताश्रया हस्ताः प्रयोक्तव्या [4]बुधैर्नरैः ॥ १७६ ॥

---

लक्षणं सौष्ठवं लक्ष्यते । "सौष्ठवं लक्षणं प्रोक्तं वर्तनाक्रमयोजितम् । (१०-७७) इति" तद्धीना अधमानाम् ॥ १७५ ॥

---

इनमें सात्त्विक भाव का बाहुल्य होने से ज्येष्ठता है। अप्रत्यक्ष अर्थात् भावी एवं भूत कालिक परस्थ रूप में आवेश न होने से सात्त्विक भावों के अवकाश का अभाव है। अतः सात्त्विक भावों से रहित अभिनय अधम है। अधम अभिनय में विप्रकीर्ण बहुल हस्त होते है, जैसे कुञ्जरक और सुन्दरक आदि के परस्थ वृत्त युद्ध के वर्णन में। इनके अतिरिक्त अर्थात् उत्तम और 'अधम अभिनयों के अतिरिक्त मध्यम हस्त का प्रयोग होता है। जैसे विदूषक के द्वारा प्रत्यक्ष दृश्यमान नाना अवस्था और आवेशकारी उद्यान आदि के वर्णन में हस्ताभिनय किया जाता है ॥ १७४ ॥

अनुवाद--उत्तम और मध्यम पात्रों द्वारा लक्षणों को अभिव्यक्त करने वाले हस्तों का प्रयोग करना चाहिए और अधम पात्रों द्वारा लोक स्वभाव के अनुसार अर्थाश्रित हस्ताभिनय करना चाहिए ॥ १७५ ॥

अभिनव—लक्षण का अर्थ सौष्ठव है। वर्त्तनाक्रम से योजित सौष्ठव लक्षण कहा गया है। अधम पात्रों का हस्तप्रयोग इन लक्षणों से रहित होता है ॥ १७५ ॥

अनुवाद—अथवा अन्य प्रकार के प्रयोग और काल (समय) को प्राप्त करके विद्वान् विपरीत अर्थ के आधार पर हस्तों का प्रयोग करें अथवा न करें ॥ १७६ ॥

---

१. क नीचक्रियास्वभावेन ।

२. क–म. नीचैरप्यर्थसंश्रयाः ।

३. क. विपरीतक्रिया ।

४. क. बुधैर्न वा ।

विषण्णे मूर्च्छिते भीते[1] जुगुप्साशोकपीडिते ।
ग्लाने [2]स्वप्ने विहस्ते च निश्चेष्टे तन्द्रिते जड़े ॥ १७७ ॥

[3]व्याधिग्रस्ते जरार्ते च भयार्ते शीतविप्लुते ।
मत्ते प्रमत्ते चोन्मत्ते चिन्तायां तपसि स्थिते ॥ १७८ ॥

[4]हिमवर्षहते बद्धे वारिणाप्लवसंश्रिते ।
स्वप्नायिते च संभ्रान्ते नतसंस्फोटने [5]तथा ॥ १७९ ॥

[6]न हस्ताभिनयः कार्यः कार्यः सत्त्वस्य संग्रह[7] ।
[8]तथा काकुविशेषश्च नानाभावरसान्वितः[9] ॥ १८० ॥

---

अथवेत्यादि । अन्येत्वाहुः—यादृग्येषां लक्षणमुक्तं ततोऽन्यथाऽपरिपूर्णश्लिष्टाकृतयोऽभिनयाद्धीनानां श्लिष्टवर्णोच्चारणवदिति । विपरीतेति भयजुगुप्साविप्रयोगे शीतकालादियोगे च सौष्ठवमस्फुटाकृतित्वं, अवहित्थादौ चासौष्ठवयोगेऽपि सौष्ठवमित्यादि वैपरीत्यम् ॥ १७६ ॥

---

अभिनव--अथवेत्यादि । अन्य लोग तो कहते हैं कि जिनका जैसा लक्षण कहा गया है, उनसे भिन्न अपरिपूर्ण और श्लिष्ट आकृति वाले हस्ताभिनयों का अभिनय से हीन व्यक्तियों के अपूर्ण और श्लिष्ट वर्णोच्चारण के समान प्रयोग करना चाहिए। 'विपरीत' का अभिप्राय है कि भय, जुगुप्सा आदि के प्रयोग में और शीत, वर्षा आदि के योग में हस्तों की अस्फुट स्थिति ही सौष्ठव है और अवहित्थ आदि में सौष्ठव की योजना न करना ही सौष्ठव है, यही विपरीतता है ॥ १७६ ॥

---

१. क. ह्रीते । २ ख. ग. सुप्ते ।
३. क-म पुस्तके "व्याधिग्रस्ते ज्वरार्ते च तपश्श्रान्ते भयान्विते ।
मत्तोन्मत्तप्रमत्तेषु शोकार्ते शीतविप्लुते" । इति पाठो दृश्यते ।
४. ख. ग. हिमवर्षगते बन्धे हरिणप्लवसंश्रिते ।
५. ख. ग. नतसंस्फोटने तथा ।
६ ख तथा हस्ताभिनयः कार्यः ।
७. ख. ग. कार्यः सत्त्वसमाश्रयः ।
८. ख. ग. तथाकारविशेषश्च ।
९. क. नानार्थरसभावकः ।

विहस्तो हस्तवैकल्याधानं, मत्तो मद्येन, प्रमत्तः प्रमादात्, उन्मत्तोऽपस्मारी ॥ १७७-१७८ ॥

किं सर्वं एवात्र हस्ताभिनय इत्याशङ्क्य प्रतिप्रसवार्थमाह कार्यं इति। ये हस्ता आन्तरीं चित्तवृत्तिं सूचयन्ति। कपोतक इव भयं, कर्कटक इव मदनविजृम्भां, दोल इव शोकं, शुकतुण्ड इवेर्ष्यां, ते कार्या एव, सात्त्विकवदनुभावस्य भावत्वात्ते तेषां सात्त्विकश्च कार्यं एवेत्यावृत्त्या। ये तु बाह्यद्रव्यगुणादिगमकास्ते न कर्तव्या इति ॥ १८० ॥

---

अनुवाद—विषण्ण ( खिन्न ), मूर्च्छित, भीत ( पाठभेद से हीन-लज्जित ), जुगुप्सा ( घृणा ) शोक-पीड़ित, ग्लान ( मलिन ), सुप्त, विहस्त ( लूला ), निश्चेष्ट, तन्द्रित, जड़, व्याधिग्रस्त, जरा-जीर्ण ( बुढ़ापे से पीड़ित ), भयार्त्त ( भय से पीड़ित ) शीत से कम्पित, मत्त, प्रमत्त, उन्मत्त, चिन्ता, तपस्वी, हिम ( बर्फ ) और वर्षा से आहत, बद्ध ( जेल में बन्द ), जल से आप्लुत, स्वप्नायित ( स्वप्न में बड़बड़ाना ) सम्भ्रान्त, नत और संस्फोटन की दशा में हस्ताभिनय नहीं करना चाहिए, सत्त्व का सञ्चय करना चाहिए और नाना प्रकार के अर्थ रस और भावों के अभिव्यञ्जक काकुविशेष का अभिनय करना चाहिए ॥ १७७–१८० ॥

अभिनव—'विहस्त' का आशय हाथ में विकलता है। 'मत्त' का अर्थ है मदपान से मत्त होना। 'प्रमत्त' का अर्थ है प्रमाद से युक्त और 'उन्मत्त' का अर्थ अपस्मार से युक्त होना है।

अभिनव क्या सभी हस्ताभिनय यहाँ होते हैं? इस प्रकार आशङ्का करके प्रत्ययवाद के लिए कहते हैं 'कार्यं' इति। जो हस्त आन्तरी ( भीतरी ) चित्तवृत्ति को सूचित करते हैं। उन्हें अवश्य किया जाय। जैसे कपोत हस्त भय को, कर्कटक हस्त मदनविजृम्भण को, दोलहस्त शोक को, शुकतुण्ड हस्त ईर्ष्या को सूचित करता है, उन्हें अवश्य ही करना चाहिए। सात्त्विक के समान अनुभाव के भाव होने से सात्त्विक भाव को आवृत्ति से करना ही चाहिए, किन्तु जो बाह्य द्रव्यनिष्ठ गुणों के गमक है उन्हें नहीं करना चाहिए ॥ १७९–१८० ॥

[1]यत्र व्यग्रावुभौ हस्तौ तत्तद् दृष्टिविलोकनैः[2] ।
[3]वाचिकाभिनयं कुर्याद्विरामैरर्थदर्शकैः ॥ १८१ ॥
उत्तानः पार्श्वगश्चैव तथाऽधोमुख एव च ।
प्रचारस्त्रिविधोऽङ्गानां नाट्यनृत्तसमाश्रयः ॥ १८२ ॥

---

यत्र तु सर्व एव न कर्तव्यास्तं विषयमाह यत्र व्यग्राविति ।

यथा सारथेः प्रतोदरश्मिव्यग्रहस्ततायाम् । विलोकनैरिति विलोक्यते चित्तवृत्तिरनेनेति मुखरागादि, कुर्यादिति स्फुटयेदित्यर्थः । अर्थदर्शकैरिति अनुवृत्तिलक्षणोपरोधकृतैरित्यर्थः ॥ १८१ ॥

हस्तानां दिग्भेदावस्थानकृतं प्रचारमाह—उत्तान इत्यादि ।

---

**अभिनव**—जहाँ पर सभी हस्ताभिनय नहीं करना चाहिए, उस विषय को कहते हैं—'यदा व्यग्रौ' इत्यादि ।

**अनुवाद**—उन-उन विभिन्न दृष्टियों के विलोकन से यदि दोनों हाथों का संचार व्यग्र हो जाय तो अर्थदर्शक विरामों के साथ वाचिक अभिनय करना चाहिए ॥ १८१ ॥

**अभिनव**—जिस प्रकार सारथि के द्वारा चाबुक एवं लगाम को संभालने में दोनों हाथों के व्यग्र रहने पर हस्ताभिनय नहीं हो सकता । 'विलोकनैः' पद से चित्तवृत्ति मालूम पड़ जाने पर कि यह किस चित्तवृत्ति का है, वे मुखराग आदि, उनका अस्फुट रूप से अभिनय करे । 'अर्थदर्शक' पद का अभिप्राय है, अनुवृत्ति लक्षणोपरोध से किये गये विरामों के साथ ॥ १८१ ॥

**अभिनव**—दिग्भेद के अवस्थानभूत हस्तप्रचार को कहते हैं—'उत्तान' इत्यादि ।

**अनुवाद**—बाह्य और नृत्य में किये जाने वाले अङ्गों के प्रचार तीन प्रकार के होते हैं—उत्तान, पार्श्वग और अधोमुख ॥ १८२ ॥

---

१. ख. म. यथा ।
२. ख. यत्र दृष्टिविलोकितैः ।
ग. तत्र दृष्टिविलोकनैः ।
३. अयं श्लोकार्धः 'ख' पुस्तके नास्ति ।

अन्ये तु—

[1]उत्तानो वर्त्तुलस्त्र्यश्रः स्थितोऽधोमुख एव च।
[3]पञ्च प्रकारा हस्तस्य नाट्यनृत्तसमाश्रयाः ॥ १८३ ॥

---

यथा 'विरचितमुर्वीसंस्थ' मित्यभिनये (९।२२) पताकः। यथा वा जिह्वाभिनये आस्यक्षेत्रगोऽग्रगस्त्रिपताकः। पार्श्वगो यथा धनुरभिनये मुष्टिः। अधोमुखो यथा समुद्राभिनये ललाटक्षेत्रगः स्वस्तिकपताकः। यथा "संवृतविवृतं पाल्यमित्यत्र" त्रिपताकः। उत्तानोऽधस्तलस्त्र्यश्रोऽग्रगोऽधोमुख एव च। पञ्च प्रकारा हस्तस्येति भट्टोद्भटः पठति। तत्राधस्तलेऽधोमुखोऽन्तर्भूतः। उत्तानेऽग्रगः त्र्यश्रः त्रिपार्श्वग एव। अत्रापि तु समविषमत्र्यश्रिताद्यवान्तरभेद उत्तानादेर्भवति। इत्थं त्रैविध्यमेव युक्तम् तत्र रसनिष्पादनमभिनयस्य वस्त्वित्युक्तं तत्र करणमनुभावात्मकं, तत्राङ्गहारा करणसञ्चयाः। करणस्य च लक्षणमुक्तम् "यानि स्थानानि याश्चार्यो नृत्तहस्तास्तथैव च" (४-६०) इत्यादि। तत्र स्थानकचार्यः स्वक्षेत्रे (अ-१३) लक्षयिष्यन्ते ॥ १८१-१८२ ॥

---

अनुवाद—नाटच और नृत्त में किये जाने वाले हाथों के पाँच प्रकार हैं—उत्तान, वर्त्तुल, त्र्यस्त्र, स्थित और अधोमुख ॥ १८३ ॥

अभिनव—जैसे 'विरचितमुर्वीसंस्थम्' अर्थात् 'पृथ्वी पर निर्माण किया' इस अभिनय में पताकहस्त उत्तान है अथवा जैसे जिह्वा के अभिनय में मुखक्षेत्र में जाने वाला अग्रग त्रिपताक हस्त है। पार्श्वगत जैसे धनुष के अभिनय में मुष्टिहस्त का प्रयोग। अधोमुख जैसे समुद्र के अभिनय में ललाट क्षेत्रगत स्वस्तिक पताक हस्त है। जैसे—'संवृत-विवृत्त पाल्य है, यहाँ पताकहस्त'। उत्तान, अधस्तल, त्र्यस्र, अग्रग और अधोमुख ये पाँच प्रकार के हस्त प्रचार है ऐसा भट्टोद्भट्ट कहते हैं।

---

१. ख. उत्तानोऽधस्तलस्तिर्यगूर्ध्वाधोमुख एव च।
हस्तप्रचारा विज्ञेया नाट्ये नृत्ते च पञ्चधा ॥
२. क-ङ. उत्तानोऽधस्तलस्तिर्यगूर्ध्वाधोमुख एव च।
क-म. उत्तानोऽधस्तलस्त्र्यस्रः ऊर्ध्वाधोमुख एव च ॥
३. ख. हस्तप्रचारा विज्ञेया नाट्ये नृत्ते च पञ्चधा।
क-द. हस्तप्रचारस्त्रिविधो नाट्यनृत्तसमाश्रयः।
क-न. हस्तप्रचारस्त्रिविधा नाट्यनृत्तसमाश्रिताः ॥

एवं ज्ञेयाः करा ह्येते नानाभिनयसंश्रिताः[1]।
अत ऊर्ध्वं प्रवक्ष्यामि हस्तान्[2] नृत्तसमाश्रयान् ॥ १८४ ॥

हस्तप्रसङ्गान्नृत्तहस्ता वक्तव्याः। किञ्चाभिनयकृताप्येषां क्वचिद्व्याकर्तुं यथा लताहस्तौ प्रतिपद्येते नृत्ताभिनयनं प्रति ( ९–२०० ) यथा वा करिहस्तस्य हस्त्यभिनयनम्।

एवं चतुरश्रादीनामपि प्रयोगवशात् द्रष्टव्यमित्याशयेनाह—अत उर्ध्वमिति। वृत्तस्य करणात्मकस्याश्रयाद्धेतुता। एभ्योऽभिनयहस्तेभ्य उर्ध्वमित्येतद्गणना पृठेऽभिनयनहस्तत्वेनापि गणनायोग्यादित्यर्थः ॥ १८४ ॥

उनका खण्डन करते हुए अभिनवगुप्त कहते हैं कि उनमें अधस्तल में अधोमुख अन्तर्भूत है। उत्तान में अग्रग और त्रिपार्श्वगत हस्त में त्र्यस्र अन्तर्भूत है। यहाँ पर उत्तान आदि के सम, विषम, त्र्यश्रित आदि अवान्तर भेद होते हैं। इस प्रकार हस्त प्रचार के तीन प्रकार ही (त्रैविध्य ही ) युक्त है। वहाँ रस का निष्पादन अभिनय की वस्तु है, ऐसा कहा है। उसमें करण अनुभावात्मक है। वहाँ अङ्गहार करणों का सञ्चय है। करण का लक्षण पहिले कहा गया है जो स्थान, जो चारियाँ और जो नृत्तहस्त है, उन्हें नृत्तमातृका समझनी चाहिए और उनके योग से 'करण' होता है। उनमें स्थानक और चारी का अपने क्षेत्र में ( तेरहवें अध्याय में ) लक्षण करेंगे ॥ १८२–१८३ ॥

**अनुवाद—इस प्रकार के अभिनयों के समाश्रित इन करों ( हस्तों ) को समझना चाहिए। इसके बाद नृत्त के समाश्रित नृत हस्तों को कहूँगा ॥ १८४ ॥**

**अभिनव**—हस्ताभिनयों के निरूपण करने का प्रसङ्ग होने से नृत्तहस्तों को कहते हैं। और भी अभिनयकर्त्ता भी कहीं पर उसकी व्याख्या करने के लिए जैसे नृत्ताभिनय के विषय में लताहस्त प्रतिपन्न होता है और जैसे हाथी के अभिनय में करिहस्त का प्रयोग होता है।

१. क. ख. नानाभिनयसंश्रयाः।
क–म. नानार्थरससम्भवा।
२. क–ग. करान्।

¹वक्षसोऽष्टाङ्गुलस्थौ तु प्राङ्मुखौ² खटकामुखौ³ ।
समानकूर्परांसौ तु चतुरस्रौ प्रकीर्तितौ ॥ १८५ ॥

तत्र चातुरश्र्यमूलं नृत्तेऽङ्गस्य जीवितमिति तन्निमित्तभुवौ चतुरश्रौ तावदाह वक्षस इति ।

वक्षोऽतिक्रम्य योऽष्टाङ्गुलो देशः तत्रस्थौ परस्परं त्वष्टाङ्गुलान्तरत्वात् प्रत्युत चातुरश्र्यं भवतीत्युत्प्रेक्ष्येमेव । प्राङ्मुखाविति यत्संमुखः प्रयोक्ता यत्संमुखावेव, न

अभिनव—इस प्रकार प्रयोग के अनुसार चतुरस्र आदि को भी देखना चाहिए, इस आशय से कहते हैं 'अत ऊर्ध्वम्' इत्यादि। करणात्मक नृत्त के आश्रय से इसमें हेतुता है। इन अभिनय हस्तों के बाद इस प्रकार की गणना के पृष्ठ पर अभिनय के हस्त के रूप में गणना करना उचित है, यह इसका अर्थ है ॥ १८४ ॥

विमर्श—नृतहस्त हस्त, पाद और शरीर के सामञ्जस्य से सौन्दर्य ( शोभा ) उत्पन्न करते है और नृत्य को शोभायुक्त बनाते हैं। अङ्ग-प्रत्यङ्गों के सौन्दर्य-वर्धन में नृत्त-हस्तों का बड़ा हाथ रहता है। इसलिए नृतहस्तों को नृत्य का अलङ्कार कहा गया है। इन नृतहस्तों को उत्पत्ति असंयुत और संयुत हस्ताभिनय के विविध रूपों के आधार पर होतीं है। नाट्यशास्त्र में तीस नृत्तहस्तों का विवेचन है जब कि भरतार्णव में बाईस ( १६ + ६ = २२ ) नृत्तहस्त वणित हैं। अभिनयदर्पण में तेरह नृत्तहस्तों का निरूपण है। नृत्तरत्नावली और सङ्गीतरत्नाकर में नाट्यशास्त्र के समान तीस नृत्तहस्तों का विवेचन है ॥ १८४ ॥

## ३. नृत्तहस्त

### १. चतुरस्र नृत्तहस्त

अभिनव—चातुरश्र्य मूलक नृत्त में नृत्त अङ्ग का जीवन है। इन नृत्तों की निमित्तभूमि चतुरश्र नृत्तहस्तों को कहते हैं–'वक्षसि' इत्यादि।

अनुवाद—वक्षःस्थल से आठ अङ्गुल की दूरी पर स्थित दोनों खटकामुख हस्त प्राङ्मुख ( सामने ) हों और दोनों कोहनियाँ तथा कन्धे समान रूप में सन्तुलित हों तो 'चतुरस्र' नृतहस्त कहलाता है ॥ १८५ ॥

१. ख. वक्षस्थोऽष्टाङ्गुलस्थौ ।
   क–ड. वक्षस्याष्ठाङ्गुलस्थौ च ।
२. पराङ्मुखाविति सोमेश्वरः । संमुखविति भोजः ।
३. ख. खटकामुखो ।

हंसपक्षकृतौ हस्तौ व्यावृत्तौ तालवृन्तवत् ।
उद्वृत्ताविति विज्ञेयावथवा तालवृन्तकौ ॥ १८६ ॥

---

तु प्रयोक्तृसंमुखौ । कूर्परयोरंसयोश्च तुलाधारणवत्समत्वमवैषम्यम् । अङ्गचातुरश्र्यदानाच्चतुरश्रौ । आकर्षणविशेष एवायमभिनयोऽपि द्विवचनादपवादविहीनत्वे द्वयोरेव प्रयोग उपपादनोयो हेतुर्हस्तान्तरस्य द्वितीयप्रकारयोगेऽपि केवलस्यैव चतुरश्रतापदेश एव, तुल्यरूपत्वाच्च न चतुष्षष्टिताव्याहतिरिति । एवं सर्वत्र ॥ १८३-१८४ ॥

अथोद्वृत्तौ हंसपक्षकृताविति ।

---

**अभिनव**—वक्ष का अतिक्रमण कर अर्थात् वक्षःस्थल से हटकर जो अष्टाङ्गुल प्रदेश है उसमें स्थित दोनों हाथों में परस्पर आठ अङ्गुल का अन्तर होने से हाथों में चातुरश्र्य होता है, इसकी उत्प्रेक्षा करनी चाहिए। 'प्राङ्मुखौ' कहने का अभिप्राय है कि नाट्यप्रयोक्ता जिसके सम्मुख हो उसी के सम्मुख चतुरश्र हस्त भी होगा न कि उसके प्रयोक्ता के सम्मुख। कोहनी और कन्धे में तुलाधारण ( तराजू की डंडी ) की तरह समानता रहे, विषमता नहीं। इस प्रकार इन कोहनी और कन्धों में चतुरस्रता का मान होने से वह चतुरस्र कहलाता है। आकर्षण विशेष में इसका अभिनय किया जाता है। द्विवचन का निर्देश होने से अपवाद-विहीन होने पर दो हाथों के प्रयोग में हेतु उपपादनीय है, अन्य हाथ के द्वितीय प्रकार के प्रयोग में भी उसी में केवल चतुरस्रता का व्यवहार होता है। तुल्य रूप होने के कारण इन हाथों की संख्या में व्याघात नहीं होता। इसी तरह सर्वत्र होता है ॥ १८५ ॥

## २. उद्वृत हस्त

**अभिनव**—अब उद्वृत हस्त का लक्षण कहते हैं-'हंसपक्षकृतौ' इत्यादि ।

**अनुवाद**—**दो हंसपक्ष हस्तों को तालवृन्त ( ताड़ के पंखे ) के समान पलट दिया जाय तो 'उद्वृत्त' नामक नृत्तहस्त होता है अथवा तालवृन्तक नामक हस्त समझना चाहिए ॥ १८६ ॥**

चतुरस्रस्थितौ हस्तौ हंसपक्षकृतौ तथा[1]।
तिर्यक्स्थितौ चाभिमुखौ[3] ज्ञेयौ तलमुखाविति ॥ १८७ ॥

आदौ चतुरश्रौ तत उद्वेष्टितवर्तनया हंसपक्ष कृत इति कृतशब्देनाह विधिम्। एको विवर्तते उत्तानः स तु, परस्त्वधोमुखः सन्नावर्तते वक्षस्स्थानमित्यर्थः। एतदेवाह तालवृन्तवदिति। आवर्त्तनकाल ऊर्ध्वं वर्तमानत्वादुद्वृत्तौ। नामान्तरेण तालवृन्तविषयत्वमभिनेयत्वं ब्रूते ॥ १८५ ॥

अथ तलमुखौ—चतुरश्रस्थिताविति।

तथेति व्यावृत्तोद्वृत्तपूर्वकत्वमस्याह। तेन परिसमाप्तिकाले स्वस्वपार्श्वस्थाङ्गौ त्र्यश्रस्थितौ हंसपक्षावेव। अन्योन्यसंमुखतलत्वात्तलमुखौ। "मडलं महुरिजिम वज्जइ" ( मर्दलं मधुरं वादयति ) इत्यादिविषये चायमभिनयोऽपि ॥ १८६ ॥

अभिनव—यहाँ 'कृत' पद का अभिप्राय है कि पहिले चतुरस्र हस्त होता है बाद में उद्वेष्टित होकर वर्तना प्रचार से हंसपक्ष कर दिया जाता हैं। एक हाथ उत्तान विर्वात्तित होता है और जो पर ( दूसरा ) हाथ है वह अधोमुख होकर वक्षःस्थल में आर्वात्तित होता है, यह अर्थ है। इसी को कहते हैं तालवृन्त की तरह। आवर्त्तकाल में ऊपर की ओर वर्तमान होने से 'उद्वृत्त' हस्त होता है। नामान्तर से उसे अभिनेय तालवृन्त कहते हैं ॥ १८६ ॥

## ३. तलमुख हस्त

अभिनव—अब तलमुख हस्त का लक्षण करते हैं–'चतुरस्रस्थितौ' इत्यादि।

अनुवाद—चतुरस्र आकार में स्थित हाथों को हंसपक्ष हस्तमुद्रा में करके तिरछे हाथों को सामने की ओर रख दिया जाय तो 'तलमुख' नामक हस्त होता है ॥ १८७ ॥

अभिनव—'तथा' पद का आशय है कि व्यावृत्त और उद्वृत्त को पहिले करके फिर इसे प्रस्तुत करे। इससे परिसमाप्ति के समय अपने-अपने पार्श्व में स्थित अङ्गों को त्र्यस्र रूप में स्थित हंसपक्ष हस्तों को करे। परस्पर एक दूसरे के सम्मुख होने से तलमुख होता है। "मंडल महुरिजिम वज्जइ" इत्यादि वादन के अभिनय में 'तलमुख' हस्त का प्रयोग होता है ॥ १८७ ॥

१. क–म. चतुरश्राविति स्मृतौ। २. क–न. यदा।
३. क–द. तिर्यङ्मुखौ चाभिमुखौ। क–म. तिर्यङ्मुखोर्ध्वाभिमुखौ।

तावेव मणिबन्धान्ते स्वस्तिकाकृतिसंस्थितौ[1] ।
स्वस्तिकाविति विख्यातौ[2] विच्युतौ विप्रकीर्णकौ ॥ १८८ ॥
अलपल्लवसंस्थानावूर्ध्वास्यौ पद्मकोशकौ ।
[3]अरालखटकाख्यौ चाप्यरालखटकामुखौ[4] ॥ १८९ ॥

---

अथ स्वस्तिकौ विप्रकीर्णौ च--तावेवेति ।

तलमुखावेवेत्यर्थः । अन्तस्समीपः । स्वस्तिको नाम लक्षणविशेषः । विच्युताविति विशेषेण सहसा च्युतावित्यर्थः । एवं पूर्ववृत्तनृत्तकरचतुष्टयस्वरूपोपजीवित्वं स्वस्तिकविप्रकीर्णयोः ॥ १८७ ॥

अरालखटकामुखावाह—अलपल्लवसंस्थानाविति ।

---

## ४-५. स्वस्तिक एवं विप्रकीर्ण हस्त

अभिनव—अब स्वस्तिक और विप्रकीर्ण हस्तों का लक्षण कहते हैं--

अनुवाद यदि तलमुख नृत्तहस्त को मणिबन्ध के ऊपर स्वस्तिक आकार में रख दिया जाय तो 'स्वस्तिक' हस्त होता है और यदि उन्हीं को मणिबन्ध से विच्युत कर दिया जाय तो तो 'विप्रकीर्णक' हस्त होता है ॥ १८८ ॥

अभिनव—'तौ' पद का अर्थ है तलमुखौ हस्त । 'अन्तः' पद का अर्थ है समीप स्वस्तिक अर्थात् स्वस्तिकाकार। 'विच्युत' पद का अर्थ है सहसा विशेष रूप से च्युत होने वाला । इस प्रकार स्वस्तिक-विप्रकीर्ण हस्त पूर्व में कहे गये चार नृत्त-हस्तों का आधार लेकर प्रवृत्त होता है ॥ १८८ ॥

## ६. अरालखटकामुख हस्त

अभिनव--अब अरालखटकामुख हस्त का लक्षण कहते हैं--

अनुवाद--यदि दोनों अलपल्लव हस्तों को ऊपर अर्ध्वमुख करके पद्मकोश हस्तमुद्रा में परिवर्तित कर दिया जाय तो 'अरालखटकामुख' हस्त होता है ॥१८९॥

---

१. क–ङ. स्वस्तिकाविति संस्थितौ ।
२. क–म. विख्यातावरालौ ।
३. ख. अरालकटकाख्यौ वा अरालकटकामुखौ ।
   क–म. ज्ञेयावभिमुखौ तज्ज्ञैरालखटकामुखौ ।
४ ग. चाप्यरालखटकामुखौ ।

अन्ये तु—

[1]तथैव मणिबन्धान्ते ह्यरालौ[2] विच्युतावुभौ ।
ज्ञेयौ प्रयोक्तृभिर्नित्यमरालखटकाविति ॥ १९० ॥
भुजांसकूर्पराग्रैस्तु कुटिलावर्तितौ करौ ।
[3]पराङ्मुखतलाविद्धौ ज्ञेयावाविद्धवक्रकौ ॥ १९१ ॥

---

स्वस्तिकवत्पताकौ कृत्वा अलपल्लवोपलक्षितया व्यावर्तितकरणवर्तनया परिवर्तनान्तया तावेवोर्ध्वमुखौ पद्मकोशौ विधाय समनन्तरमेव भाविनलिनीपद्मकोशाभ्यामरालवर्तनया एकमरालं द्वितीयं खटकामुखं चातुरश्र्यसंस्थानेन कुर्यात् । स्वस्तिकेनेति त्वपरे । अरालौ ततः खटकावित्येके ॥ १८८-१८९ ॥

---

अभिनव—स्वस्तिक हस्त की तरह पताक हस्तों को करके अलपल्लव के रूप से उपलक्षित व्यावर्त्तित करण वर्त्तना से उन्हीं ऊर्ध्वमुख पद्मकोष हस्तों को करके उसके समनन्तर ही आगे कहे जाने वाले नलिनी पद्मकोशों के द्वारा अराल हस्त की वर्त्तना से एक हस्त को अराल और दूसरे हस्त को खटकामुख चातुरश्र्य संस्थान से करना चाहिए । दूसरे लोग कहते हैं कि स्वस्तिक संस्थान से अराल और खटकामुख हस्तों को रखा जाय । एक अन्य आचार्यों का मत है कि पहिले अरालमुख हस्तों को और बाद में खटकामुख हस्तों को रखना चाहिए ॥ १८८–१८९ ॥

### अन्य लक्षण

अनुवाद—उसी प्रकार यदि दो अराल हस्तों मणिबन्ध के समीप स्वस्तिक के बाद 'विच्युत' कर दिया जाय तो नाटचप्रयोक्ताओं को उसे 'अरालखटकामुख' समझना चाहिए ॥ १९० ॥

---

१. 'ख' पुस्तकेऽयं श्लोको नास्ति ।

२. ग. ह्यरालविच्युतावुभौ ।

३. ख. ग. पराङ्मुखतयाविद्धौ ज्ञेयावाविद्धवक्रकौ ।
क-म. अधोमुखतलाविद्धावाविद्धाविति संज्ञितौ ।

हस्तौ तु सर्पशिरसौ [1]मध्यमाङ्गुष्ठकौ यदा ।
तिर्यक्प्रसारितास्यौ च तदा सूचीमुखौ स्मृतौ ॥ १९२ ॥

अन्ये तु—

[2]सर्पशीर्षौ यदा हस्तौ भवेतां स्वस्तिकस्थितौ ।
मध्यप्रसारिताङ्गुष्ठौ ज्ञेयौ सूचीमुखौ तदा ॥ १९३ ॥

---

अथाविद्धवक्रावाह—भुजांसकूर्परागैरिति ।

वृत्तानुरोधादेवं पठितम् । अयं त्वर्थः अंसाभ्यां कूर्पराग्राभ्यां भुजाग्राभ्यां च क्रमेणोपलक्षितं यत्कुटिलं सविलासं (पताकौ) कृत्वा आवर्तनं व्यावर्तितकरणं कनिष्ठादि तद्युक्तावाविद्धौ हलधारिणौ सन्तावधोमुखतलौ तदा भवतस्तथेदं नाम ॥ १९० ॥

अथ सूचीमुखौ—हस्तौ तु सर्पशिरसाविति ।

---

## ७. आविद्धवक्र हस्त

अभिनव—अब आविद्धवक्र हस्त का लक्षण कहते हैं—

अनुवाद--यदि दोनों हाथों को भुजा, स्कन्ध और कोहनियों के अग्रभाग से टेढ़ा ( तिरछा ) घुमा दिया जाय और हथेलियों को पराङ्मुख ( अधोमुख ) करके आविद्ध कर दिया जाय तो 'आविद्धवक्र' हस्त होता है ॥ १९१ ॥

अभिनव—वृत्त ( छन्द ) के अनुरोध से ऐसा पढ़ा गया है, किन्तु यहाँ अर्थ यह है कि अंस ( कन्धे से ), कोहनी के अग्रभाग से और भुजा को अग्रभाग से उपलक्षित जो कुटिल विलास के साथ पताकहस्तों को करके व्यावर्त्तित करण रूप आवर्त्तन है, कनिष्ठा आदि से युक्त आविद्ध हलधारी हस्त की हथेलियाँ अधोमुख होती हैं तब यह आविद्धवक्र नाम होता है ॥ १९० ॥

## ८. सूचीमुख

अभिनव—अब सूचीमुख हस्त का लक्षण कहते हैं—

अनुवाद—दो सर्पशीर्ष हस्तों को अपने अंगूठे हथेली के मध्य उनका मुख भाग तिरछे फैला दिया जाय तो 'सूचीमुख' हस्त होता है ॥ १९२ ॥

---

१. ख. ग. मध्यस्थाङ्गुष्ठकौ ।
२. 'ख' पुस्तकेऽयं श्लोको नास्ति ।

रेचितौ चापि विज्ञेयौ हंसपक्षौ [1]द्रुतभ्रमौ।
प्रसारितोत्तानतलौ रेचिताविति [2]संज्ञितौ ॥ १९४ ॥

---

चतुरश्रस्थानगो सर्पशिरसौ मध्यमाङ्गुलिनिविष्टाङ्गुष्ठौ कृतौ यदा तिर्यक्प्रसारितं पार्श्वगमनेन सह विकाशितं मुखं तर्जन्यग्ररूपं द्वयोस्तावृशौ [3]बाहुप्रसारणेन पर्यायशः क्रियेते तदा सूचीमुखौ सूचीवद्बाहुप्रसारणात्[4] तत्र तुशब्दः पर्यायं द्योतयति।

सूचीमुखौ—मध्यप्रसारिताङ्गुष्ठौ स्वस्तिकौ सर्पशीर्षकौ [5]इत्येकेषां पाठः ॥ १९२-१९३ ॥

---

अनुवाद—जब सर्पशीर्ष हस्त स्वस्तिक मुद्रा में स्थित हो और मध्य हथेली में अंगूठे को फैला दिया जाय तो 'सूचीमुख' हस्त समझना चाहिए ॥ १९३ ॥

अभिनव—चतुरस्र स्थान में स्थित जब दोनों सर्पशीर्ष हस्तों को मध्यमा अंगुलि में निविष्ट है अङ्गुष्ठ जिसमें ऐसे सर्पशीर्ष हस्तों को जब तर्जनी के अग्ररूप मुख को तिरछा कर पार्श्व में ले जाकर फैला दिया जाय और बाहर की ओर फैलाकर क्रमशः प्रस्तुत करते रहे तो बाहर की ओर फैलाने से सूची के समान होने से 'सूचीमुख' हस्त होता है। यहां 'तु' शब्द पर्याय को द्योतित करता है।

एक अन्य पाठ के अनुसार सूचीमुख हस्त वे होते हैं जिनके अंगूठे हथेली के मध्य फैलाए हुए हों, अतः स्वस्तिक के आकार के होने से सर्पशीर्ष हस्त हैं ॥ १९२-१९३ ॥

---

१. ख. ग. हंसपक्षोद्‌भ्रमौ। क-म. हंसपक्षौ भ्रमस्थितौ।
   क. द. हंसपक्षौ भ्रमद्रुतौ। क-म. हंसपक्षौ भ्रमक्रमौ।
२. ख. रेचितावेव संस्थितौ।
   ग. रेचिताविति संस्थितौ।
३. क. बहिःप्रसारणेन।
४. क. बहिःप्रसारणात्।
५. क. अपावृत्तिपरिवृत्तिभ्यां चतुरश्रगौ पताकौ प्रथमं कृत्वा पश्चात् सर्पशिरसौ रेचितस्वस्तिकौ सूच्यास्याविति मतान्तरम्।

चतुरस्रो भवेद्वामः सव्यहस्तश्च रेचितः ।
विज्ञेयौ [1]नृत्ततत्त्वज्ञैरर्धरेचितसंज्ञकौ ॥ १९५ ॥

---

अथ रेचितौ—अर्धरेचितौ चापीति ।

केचित् रेचितौ रेचिताविंत्यत्य पौनरुक्त्यपरिजिहीर्षवो द्वे लक्षणे इत्याहुः तेन द्रुतो भ्रान्तावविकृतावेव हंसपक्षौ रेचितौ तथा प्रसारितोत्तानतलत्वेन विकृतावपि रेचिताविति । अन्ये त्वेकमेव वाक्यमित्याहुः । रेचितौ सन्तौ यौ द्रुतभ्रमौ तौ रेचितसंज्ञाविति न पौनरुक्त्यम् । संज्ञयैवार्धरेचिते लब्धे पुनर्वचनमविशेषेण चातुरश्र्यस्य स्थितिं सूचयन् नृत्तहस्तान्तरेष्वपि अङ्गपर्यायेण प्रयोगं सूचयति ॥ १९३-१९४ ॥

---

अभिनव—अब रेचित और अर्धरेचित हस्तों का लक्षण कहते हैं—

## ९. रेचित हस्त

अनुवाद—शीघ्रता से घूमने वाले हंसपक्ष हस्तों को 'रेचित' हस्त समझना चाहिए और हथेली को ऊपर फैला देने से भी 'रेचित' संज्ञक हस्त होता है ॥ १९४ ॥

## १०. अर्धरेचित

अनुवाद—यदि बाँये हाथ को चतुरश्र और दाहिने हाथ को रेचित कर दिया जाय तो नृत्ततत्त्ववेत्ताओं को उसे 'अर्धरेचित' संज्ञक हस्त समझना चाहिए ॥ १९५ ॥

अभिनव—कुछ आचार्य 'रेचितौ रेचितौ' इस पुनरुक्ति के परिहार के लिए रेचित के दो लक्षण होते हैं, ऐसा कहते हैं, इसलिए शीघ्रता से घूमने वाले अविकृत (बिना किसी परिवर्त्तन के) हंसपक्ष रेचित है और हथेलियों को ऊपर की ओर फैला देने से विकृत भी 'रेचित' होता है । अन्य लोग तो इसे एक ही वाक्य मानते हैं । रेचित होते हुए भी जो द्रुतभ्रम है वे रेचित संज्ञक हस्त हैं, अतः पुनरुक्ति नहीं है । नाम से ही अर्धरेचित स्वरूप के प्राप्त हो जाने पर पुनः कथन सामान्य रूप से चतुरश्र की स्थिति को सूचित करते हुए अन्य नृत्तहस्तों में भी अङ्गों के पर्याय से प्रयोग को सूचित करता है ॥ १९४-१९५ ॥

---

१. क-म. नाट्यतत्त्वज्ञैरर्धरेचितसंज्ञकौ ।

अञ्चितौ कूर्परांसौ तु त्रिपताकौ[1] करौ कृतौ ।
किञ्चित्तिर्यग्गतावेतौ स्मृतावुत्तानवञ्चितौ ॥ १९६ ॥
मणिबन्धनमुक्तौ तु पताकौ पल्लवौ स्मृतौ ।

---

अथोत्तानावञ्चितौ[2]—अञ्चिताविति ।

त्रिपताकौ हस्तावंसकपोलललाटानामन्यतमक्षेत्रे कृतौ अञ्चनक्रियया युक्तौ अन्योन्याभिमुखावर्धतिरश्चीनौ, तथांसयोः कूर्परयोश्चाञ्चनं किञ्चिच्चलनं भवति । अञ्चनसमये उत्तानत्वप्राप्तेः पुनरप्यञ्चनेनोद्गमनक्रियायोगान्मृदूत्तानावञ्चितौ ॥ १९५ ॥

अथ पल्लवौ—मणिबन्धनमुक्तौ त्विति ।

---

## ११. उत्तानवञ्चित हस्त

अभिनव—अब उत्तानवञ्चित हस्त का लक्षण करते हैं—

अनुवाद—जिसको कोहनियाँ और कन्धे अञ्चित हों और हस्त त्रिपताक हस्त-मुद्रा में होकर किञ्चित् तिरछे हो जाँय तो 'उत्तानवञ्चित' हस्त होता है ॥ १९६ ॥

अभिनव—यदि त्रिपताक हस्तों को स्कन्ध, कपोल एवं ललाट में से किसी एक स्थान क्षेत्र में अञ्चन क्रिया से युक्त करते हुए परस्पर एक दूसरे के सामने थोड़ा तिरछा कर दे और कन्धों एवं कोहनियों में अञ्चन अर्थात् किञ्चित् चलन हो तो अञ्चन के समय उत्तानता की प्राप्ति होने से पुनः अञ्चन करने से उद्गम क्रिया के योग से वे मृदु रूप में उत्तान और अञ्चित होने से 'उत्तानवञ्चित' हस्त होते हैं ॥ १९६ ॥

## १२. पल्लव

अभिनव—अब पल्लवहस्त का लक्षण कहते हैं—

अनुवाद—यदि वे हस्त मणिबन्ध से मुक्त होकर पताक के आकार में स्थित हों तो 'पल्लव' हस्त होता है ॥ १९७ ॥

---

१. ख. ग. त्रिपताकाकृती करौ ।
२. क. अथोत्तानवञ्चितौ ।

बाहुशीर्षाद्विनिष्क्रान्तौ[1] नितम्बाविति कीर्तितौ[2] ॥ १६७ ॥

ऊर्ध्वव्यावर्तितकरणेन बाहू प्रसार्य परिवर्तितक्रियया स्वस्तिकाकृती पताकौ। पल्लवाकारत्वात् यथोक्तौ। शिथिलौ पल्लवावित्यन्ये पठन्तः त्रिपताकावित्यनुवर्तयन्ति।

अथ नितम्बौ—बाहुशीर्षाविति।

पताकाविति अनुवर्तते। स्कन्धक्षेत्राद्विचित्रत्वेनोत्तानत्वाधोमुखत्वपर्यायत्वेन निष्क्रान्तौ पताकौ, नाम्ना क्षेत्रस्याक्षेपात् नितम्बक्षेत्रे तथैव पर्यायेण वर्तमानौ नितम्बौ[3] ॥ १९६ ॥

अभिनव—ऊपर की ओर व्यावर्त्तित करण से बाहुओं को फैलाकर परिवर्त्तित क्रिया से स्वस्तिक के आकार में पताक हस्त हों तो पल्लव के आकार में होने के कारण इसे 'पल्लव' हस्त कहते हैं। अन्य आचार्य तो 'शिथिलौ पल्लवौ' यह पाठ मान कर त्रिपताकौ' का अनुवर्त्तन करते हैं ,। १९७ ॥

## १३. नितम्ब हस्त

अभिनव—नितम्ब हस्त का लक्षण करते हैं—

अनुवाद—यदि पताक हस्तों को बाहुशोर्ष अर्थात् कन्धे से निष्क्रान्त कर दिया जाय अर्थात् निकाल दिया जाय तो 'नितम्ब' हस्त कहा जाता है ॥ १९७ ॥

अभिनव—'पताकौ' का अनुवर्त्तन होता है। स्कन्ध क्षेत्र से विचित्र रूप में क्रमशः उत्तानमुख और अधोमुख निकले हुए पताकहस्त नितम्ब नामक क्षेत्र का आक्षेप होने से नितम्ब के क्षेत्र में उसी प्रकार क्रमशः वर्तमान होने से वे 'नितम्ब' हस्त कहे जाते हैं ॥ १९७ ॥

१. ख. शीर्षादिनिष्क्रान्तौ। क-म. बाहुशीर्षविनिष्क्रान्तौ।

२. क-म. संज्ञितौ।

३. क. त्रिपताकावित्यन्ये पताकस्थाने वर्तयन्ति इत्यधिकं वर्तते।

'केशदेशाद्विनिष्क्रान्तौ परिपार्श्वोत्थितौ' यदा ।
विज्ञेयौ केशबन्धौ' तु करावाचार्यसम्मतौ ॥ १९८ ॥

अथ केशबन्धौ—केशदेशाविति ।

आदौ पार्श्वक्षेत्रात् तत्पार्श्वपरिवर्णनपूर्वकमुत्थितौ' शिरः क्षेत्रं प्राप्तौ, अत एव केशदेशान्नितम्बहस्तोक्तवदेव विचित्रहस्तत्वेन निष्क्रान्तौ तथा तेनैव प्रकारेण पुनः केशदेश एव पर्यायशो गतागतत्वेन प्रत्यावर्तमानौ । केशसंबन्धात्केशबन्धौ । आचार्यसंमतौ च शोभातिशयकरणात् ॥ १९७ ॥

## १४. केशबन्ध हस्त

अभिनव -अब केशबन्ध हस्त का लक्षण कहते हैं—

अनुवाद -जब केश प्रदेश से विनिष्क्रान्त होकर दो पताक हस्त परिपार्श्व अर्थात् दोनों बाहुओं पर सोधे रख दिये जांय तो आचार्य सम्मत 'केशबन्ध' नामक हस्त समझना चाहिए ॥ १९८ ॥

अभिनव—पहिले एक पार्श्व ( बाजू ) के दूसरे पार्श्व ( बाजू ) में परिवर्तन करते हुए ऊपर उठे हुए हों अर्थात् शिरःक्षेत्र में प्राप्त हों। अतएव केश प्रदेश से नितम्ब हस्त में कहे हुए के समान विचित्र हस्त विनिष्क्रान्त ( बाहर निकले हुए ) हों और उसी प्रकार फिर केशप्रदेश में क्रमशः गमनागमन ( आना-जाना ) से प्रत्यावर्तित हों, वे केशों के सम्बन्ध से 'केशबन्ध' हस्त कहलाते हैं। वे हस्त शोभावर्द्धक होने के कारण आचार्य सम्मत हैं ॥ १९८ ॥

१. क-न. एकदेशविनिष्क्रान्तौ ।
क-म. अंसदेशविनिष्क्रान्तौ ।
क-द. केशदेशान्निवृत्तौ तु ।

२. क-प. केशबन्धाख्यौ ।

३. क. पताकाविति वर्तते । अन्ये त्रिपताकाविति । केचित् पल्लवाविति वर्तयन्ति ।

तिर्यक्प्रसारितौ चैव पार्श्वसंस्थौ तथैव च ।
[1]लताख्यौ च करौ ज्ञेयौ नृत्ताभिनयनं प्रति[2] ॥ १९९ ॥
समुन्नतो लताहस्तः पार्श्वात्पार्श्वं[3] विलोलितः ।
[4]त्रिपताकोऽपरः कर्णे करिहस्तः प्रकीर्तितः ॥ २०० ॥

अथ लताहस्तौ—तिर्यक्प्रसारितौ चेति ।

पताकाविति वर्तते । अन्ये तु नितम्बादिषु त्रिपताकावित्यनुवर्तयन्ति लताहस्तान्तेषु ॥ १९९ ॥

अथ करिहस्तः—समुन्नत इत्यादि ।

## १५. लता हस्त

अभिनव—अब लताहस्त का लक्षण करते हैं—

अनुवाद—तिरछे फैलाये हुए और पार्श्व में संस्थित दोनों पताक हस्तों को नृत्त के अभिनयन में 'लता' नामक हस्त जानना चाहिए ॥ १९९ ॥

अभिनव—यहाँ पर 'पताको' का अनुवर्त्तन है, अन्य आचार्य तो नितम्ब से लताहस्त पर्यन्त त्रिपताक का अनुवर्त्तन कहते हैं ॥ १९९ ॥

## १६. करिहस्त

अभिनव—अब करिहस्त का लक्षण कहते हैं—

अनुवाद—यदि एक लताहस्त समुन्नत होकर एक पार्श्व से दूसरे पार्श्व में विलोलित हो और दूसरा त्रिपताक मुद्रा में कर्ण ( कान ) के पास हो तो 'करिहस्त' कहलाता है ॥ २०० ॥

---

१. क-म. चतुरस्रौ तु करौ ज्ञेयौ ।
२. इति श्लोकानन्तरं क-न. पुस्तके श्लोकोऽयमधिको दृश्यते—
हस्तः पञ्चविधः कार्यो नाट्यनृत्तसमाश्रयः ।
उत्तानोऽधस्तलस्त्र्यस्रः ऊर्ध्वाधोमुख एव च ॥
३. क–ङ. पार्श्वात्पार्श्वविलोकित. ।
४. क–म. द्वितीयः कटकाख्यश्च करिहस्तौ प्रकीर्त्तितौ ।
५. ब. त्रिपताकोऽपरः कर्णे करिहस्तौ प्रकीर्तितौ ।

कटिशीर्षनिविष्टाग्रौ[1] त्रिपताकौ यदा करौ।
पक्षवञ्चितकौ हस्तौ तदा ज्ञेयौ प्रयोक्तृभिः[2] ॥ २०१ ॥

---

संश्लेषक्रमेण य उन्नतः। विलोलित इति दोलावन्नीतः। अपरग्रहणात् त्रिपताक एव ललाटाख्य इति केचित्। खटकाख्योऽपर इत्यन्ये पठन्ति। सजातीयतयानारम्भोऽस्य चतुरश्रवत्, विजातीयारम्भोऽपि नृत्ताभ्यासस्य व्यपदेशादरालखटकामुखवत्। अतो न द्विवचनम्। एकैकस्य पृथक्प्रयोगे करिहस्तत्वाभावादित्येकवचनमेव। तदाकारत्वाच्चेदं नाम[3] ॥ २०९ ॥

अथ पक्षवञ्चितौ पक्षप्रद्योतौ च—कटिशीर्षेति पाठः।

---

अभिनव—संश्लेष के क्रम से जो उन्नत है, अर्थात् जिस क्रम से स'श्लेष है उस क्रम से उन्नत। 'विलोलित' पद का अर्थ है दोला के समान झूलना। 'अपर' शब्द के ग्रहण से ज्ञात होता है कि त्रिपताक ही ललाट नामक हस्त है, ऐसा कुछ आचार्य कहते हैं। अन्य आचार्य तो कहते हैं कि अपर शब्द से खटकामुख हस्त का ग्रहण होता है। इसका चतुरस्र की तरह न तो सजातीय होकर आरम्भ होता है और न नृत्त के अभ्यास के व्यपदेश से खटकामुख की तरह विजातीय होकर आरम्भ होता है। इसलिए यहाँ 'करः' द्विवचन नहीं है। इसमें एक-एक हस्त का पृथक्-पृथक् प्रयोग होने से करिहस्त का अभाव होने से एकवचन का प्रयोग किया गया है। करि के सूँड के आकार का होने के कारण इसका नाम 'करिहस्त' है ॥ २०० ॥

अभिनव—अब पक्षवञ्चित और पक्षप्रद्योत का लक्षण कहते हैं—

## १७. पक्षवञ्चित

अनुवाद—यदि त्रिपताक हस्तों को क्रमशः कटि और शीर्ष स्थान पर रखा जाय तो नाट्यप्रयोक्ता उसे 'पक्षवञ्चित' हस्त कहते हैं ॥ २०१ ॥

---

१ क. कटिशीर्षनिविष्ठौ द्वौ। ग कटिशीर्षनिविष्टौ द्वौ।

२. क-म. विज्ञेयौ नाट्यकोविदैः।

३ यत्कीर्तिधराचार्येण त्वधंरेचिताविति नामसाम्येन करिहस्ताविति द्विवचमान्तपाठ एव गृहीतः साधीयानिति समर्थितश्च तन्मतस्य खण्डनमेतद्वाक्यम्। अयं भावः—चतुरश्राविल्यादौ सजातीयकद्वन्द्वेन वा, अरालखटकामुखावौ विजातीयतया वा द्विवचनं सम्भाव्यते। न तु करिहस्ते यत्राकृतित्वाच्च, द्वितीयहस्तप्रयोगगौणत्वाच्च, एकहस्तप्रयोग एव द्योत्यते।

[1]पादमाविद्धमावेष्टच समुत्क्षिप्य निपातयेत् ।
[2]परिवृत्य द्वितीयं च सोद्वृत्ता चार्युदाहृता ॥ ३९ ॥
पृष्ठतो वलितं पादं [3]शिरोघृष्टं प्रसारयेत् ।
सर्वतो मण्डलाविद्धं विद्युद्भ्रान्ता तु सा स्मृता ॥ ४० ॥

---

अथोद्वृत्ता

आविद्धमिति आविद्धचारीसम्बन्धिनं कुञ्चितमित्यनेन आविद्धाशेषभूतेयमिति दर्शयति । आवेष्टनं द्वितीयोरुक्षेत्रगपार्ष्णित्वम् । तमेव पादमुत्प्लुत्य भ्रमरकं कृत्वा पातयेत् । ततो द्वितीयमित्यूर्ध्वं वर्तमानत्वादुद्वृत्ता ॥ ३९ ॥

---

## १०. उद्वृत्ता चारी

अनुवाद—यदि आविद्ध पाद को आवेष्टित करके ( लपेट कर ) फिर उछाल कर गिरा दे फिर द्वितीय पाद को परिवर्त्तित कर गिरा दे तो 'उद्वृत्ता' चारी होती है ॥ ३९ ॥

अभिनव—'आविद्ध' का अर्थ है आविद्धाचारो से सम्बन्धित कुञ्चित पाद । इससे यह दिखाते हैं कि यह चारी आविद्धा चारी को शेषभूत अर्थात् अङ्गभूत है। 'आवेष्टन' का आशय है कि द्वितीय ऊरु के क्षेत्र को पार्ष्णिता । उसी पाद को उछालकर भ्रमरक मुद्रा करके नोचे गिरा दे। फिर दूसरे पाद के ऊपर को ओर वर्तमान होने से यह 'उद्वृत्ता' चारो होती है ॥ ३९ ॥

## ११. विद्युद्भ्रान्ता चारी

अनुवाद—यदि पीछे को ओर वलित किये हुए पैर को शिर से स्पर्श करता हुआ चारों ओर मण्डलाकार रूप में घुमाते हुए फैला दे तो 'विद्युद्भ्रान्ता' चारी होती है ॥ ४० ॥

---

१. क. पादमाविध्य चावेष्ट्य समुत्प्लुत्य निपातयेत् ।
क-म. पादमाविद्धकरणं परिकृत्य निर्वात्तितम् ।
प्रसारयेत् पृष्ठतश्च सोद्वृत्ता चारिरिष्यते ॥

२. क. परिवृतद्वितीयं तु सा वृत्ता समुदाहृता ।

३. क-न. शिरोद्घृष्टं । क-द. शिरोत्स्पृष्टं ।

[1]पृष्ठः प्रसारितः पादो वलितोऽभ्यन्तरीकृतः।
पाष्णिप्रपतितश्चैव ह्यलाता सम्प्रकीर्तिता[2] ।। ४१ ।।

अथ विद्युद्भ्रान्ता

पृष्ठत ऊरुमूलादिति केचित्। उपाध्यायास्तु पृष्ठतः पार्श्वात् पश्चाद् भागे वलितं कृत्वा शिरः संश्लेषात् तद्द्वारेण सर्वत उर्ध्वाधःपार्श्वेषु मण्डलवद् भ्रमितं प्रसारयेदिति विद्युद्भ्रान्ता ।। ४० ।।

अथालाता

पूर्वं पाश्चाद्भागे प्रसारितस्ततो वलनेनाभ्यन्तरीकृतो द्वितीयोरुदेशादभिमुखतलं च नीतः, ततः स्वपार्श्वपार्ष्ण्या पातित इति अलातचक्राकृतिरलाता ।। ४१ ।।

अभिनव—'पृष्ठत,' का अर्थ 'ऊरु के मूल से घुमाये' ऐसा कुछ आचार्य करते हैं। हमारे उपाध्याय जो तो कहते हैं कि पृष्ठतः अर्थात् बगल से पीछे भाग में वलित करके फिर शिर के संश्लेष से उसके द्वारा ऊपर, नीचे, अगल-बगल चारों ओर से मण्डलाकार रूप में घुमाकर फैलाये। इस प्रकार 'विद्युद्भ्रान्ता' चारी होती है ॥४०॥

अलाताचारी

अनुवाद—यदि एक पैर को पीछे की ओर फैला दे, फिर वलित करके ( घुमा करके ) भीतर किये गये एड़ो को गिरा दिया जाय तो 'अलाता' चारी होती है ।। ४१ ।।

अभिनव—पहिले एक पैर को पीछे के भाग में फैलाये, फिर वलित करके ( घुमाकर ) भीतर की ओर कर ले फिर दूसरे ऊरु के प्रदेश से सम्मुख ले जाय, उसके बाद अपने पास की एड़ी के अनुसार गिरा दे, इस प्रकार अलातचक्र को आकृति वाली यह 'अलाता' चारी होती है ।। ४१ ।।

१. ग. पृष्ठतः सर्वतः पादो वलिताऽभ्यन्तरीकृतः।
ख. पृष्ठप्रसारितः पादो वलिताभ्यन्तरीकृतः।
२. ख. पार्ष्णिप्रपादितश्चैव ह्यलाता सा प्रकीर्तिता।

[1]कुञ्चितं पादमुत्क्षिप्य त्र्यस्रमूरुं विवर्त्तयेत्[2] ।
[3]कटिजानुविवर्त्ताच्च भुजङ्गत्रासिता भवेत्[4] ॥ ४२ ॥

---

अथ भुजङ्गत्रासिता

द्वितीयोरुमूलक्षेत्रान्तं कुञ्चितमुत्क्षिप्य कटिजानुनिवर्तनेन नितम्बसम्मुखपार्ष्णित्र्यश्रमूरुं निवर्तयेत् । स्वपार्श्वगजानुकमुत्तानपादतलं कुर्यादिति पादोपान्तभुजङ्गभयभावितगतिसादृश्याद् भुजङ्गत्रासिता ॥ ४२ ॥

---

## १३. भुजङ्गत्रासिता चारी

अनुवाद—यदि कुञ्चित पाद को ऊपर की ओर उठाकर ऊरु को त्र्यस्र ( तिरछा ) विवर्त्तन करे और कटि एवं जंघा को गोल घुमाव दे तो 'भुजङ्गत्रासिता' चारी होती है ॥ ४२ )

अभिनव—कुञ्चित पाद को दूसरे ऊरु के मूल क्षेत्र तक ऊपर उठाकर कटि और जानु की ओर घुमाकर नितम्ब के सम्मुख तिरछी एड़ी को ऊरु की ओर विवर्त्तित करे, फिर अपने बगल की जानु पर पैर को उत्तान तल में स्थापित करे इस प्रकार पैर के पास सांप आने के भय से प्रभावित होकर इधर-उधर भागने की गति के समान यह चारी 'भुजङ्गत्रासिता' चारी कहलाती है ॥ ४२ ॥

---

१. क-म. उत्क्षिप्य कुञ्चितं पादं त्र्यस्रमूरुं निवर्त्तयेद् ।

२. ख. प्रवर्त्तयेत् ।

३. ख. कटिजानुविवर्त्तेन ।
क-म. कटिजानुवित्तं च ।

४. म. भ. पुस्तकयोः इतः परमुत्कीर्णालक्षणं वर्त्तते । यथा—
कुञ्चितं पादमुत्क्षिप्य जानुं चोर्ध्वं प्रसारयेत् ।
पादपृष्ठेन चोत्कीर्णा सोत्कीर्णा चारिरिष्यते ॥

अतिक्रान्तक्रमं कृत्वा समुत्प्लुत्य[1] निपातयेत् ।
[2]जङ्घाञ्चितोपरिक्षिप्ता सा ज्ञेया हरिणप्लुता[3] ॥ ४३ ॥
[4]नूपुरं चरणं कृत्वा पुरतः सम्प्रसारयेत् ।
क्षिप्रमाविद्धकरणं दण्डपादा[5] तु सा स्मृता ॥ ४४ ॥

---

अथ हरिणप्लुप्ता

अतिक्रान्तचार्युक्तकुञ्चितं पादमुत्क्षिप्योत्प्लुत्य च तमेव पातयेत् । तदनन्तरं द्वितीया जङ्घा अञ्चितपादा सती पृष्ठभागे पश्चाद्देशे क्षिप्ता कार्येति मृगप्लुति-तुल्या, 'सन्धि होदु' इत्यादौ विदूषकादेर्दृश्यते ॥ ४३ ॥

---

## १४. हरिणप्लुता चारी

अनुवाद—अतिक्रान्त चारी में कहे हुए कुञ्चित पाद को ऊपर उछालकर फिर उसे गिरा दे और जङ्घा को अञ्चित करके ऊपर की ओर क्षेपण करे तो 'हरिणप्लुता' चारी होती है ॥ ४३ ॥

**अभिनव**—अतिक्रान्त चारी में कथित कुञ्चित पाद को ऊपर उठाकर उसी को फिर गिरा दे। उसके बाद द्वितीय पैर को जङ्घा के पृष्ठभाग पर पैर को अञ्चित करके प्रक्षेपण करे। इस प्रकार मृग के उछाल के समान होने से यह 'हरिणप्लुता' चारी है ॥ ४३ ॥

## १५. दण्डपादा चारी

अनुवाद—नूपुरपादिका चारी में चरण को करके आगे की ओर फैला दे, फिर शीघ्र ही आविद्ध करे तो 'दण्डपादा' चारी होती है ॥ ४४ ॥

---

१. क-ग. चोत्प्लुत्य विनिपातयेत् ।
२. क. जङ्घाञ्चिता परिक्षिप्ता ।
३. ग. हरिणीप्लुता ।
४. क-म. स्थित्वा नूपुरपादेन पादमूर्ध्वं प्रसारयेत् ।
५. क-ङ. दण्डपादा ।

[1]अतिक्रान्तक्रमं कृत्वा त्रिकं तु परिवर्त्तयेत् ।
द्वितीयपादभ्रमणात्तलेन[2] भ्रमरी स्मृता ॥ ४५ ॥

---

अथ दण्डपादा

नूपुरपादोक्तं कुञ्चितं पादं द्वितीयपार्ष्णिगं कृत्वाग्रतः प्रसारयेत्, कथं क्षिप्रं कृत्वा तथा तथा आविद्धकरणं. आविद्धस्वदेहक्षेत्रसम्मुखीकृतजान्वग्रात् क्रिया यत्र । ऊरुजानुजङ्घस्य स्तब्धत्वेन दण्डाकारत्वाद् दण्डपादा ॥ ४४ ॥

अथ भ्रमरी

अतिक्रान्तचार्युक्तं कुञ्चितं पादमुत्क्षिप्य भुजङ्गत्रासितवत् त्र्यश्रमूरुं विवर्त्य द्वितीयपादतलभ्रमणे त्रिकं परिवर्तयेदिति सर्वशरीरपरिवर्तनद्वारेण नेमिभ्रमणाद् भ्रमरी ॥ ४५ ॥

---

अभिनव—दण्डपादेति—नूपुर पाद में कथित कुञ्चित पाद को द्वितीय पाद की एड़ियों पर ले जाकर फैला दे। कैसे फैलाये ? इस पर कहते हैं कि शीघ्रता करके फैलाये । इसमें आविद्ध अपने शरीर के क्षेत्र के सम्मुख किये हुए जानु के अग्रभाग से क्रिया की जाती है । इसमें ऊरु, जानु, जंघा की स्तब्धता से पैर के दण्डाकार स्थिति में होने से इसे 'दण्डपादा' चारी हैं ॥ ४४ ॥

## १६. भ्रमरचारी

अनुवाद—यदि अतिक्रान्ता चारी को प्रदर्शित करके त्रिक को परिवर्त्तित कर दे, फिर दूसरे पैर के तलवे से शरीर को घुमा दिया जाय । इस प्रकार भ्रमण से 'भ्रमरी' चारी होती है ॥ ४५ ॥

अभिनव—अतिक्रान्त चारी में कहे हुए कुञ्चित पाद को उछाल कर सांप से डरे हुए के समान ऊरु को तिरछा विवर्त्तित कर फिर द्वितीय पादतल के घुमाने में त्रिक का परिवर्त्तन करे। इस प्रकार समस्त शरीर के परिवर्त्तन के द्वारा नेमि ( चक्र ) की तरह भ्रमण करने से 'भ्रमरी' चारी होती है ॥ ४५ ॥

---

१. क-म. आक्षिप्तकरणं । क-द. आक्षिप्तचरणं ।
२. क-म. कृत्वाक्रान्तमपाक्रान्तमुत्प्लुत्य च निपातयेत् ।
जङ्घाञ्चितपरिक्षिप्ता सा भवेद्धरिणप्लुता ॥

[1]आकाशिक्यः स्मृता ह्येता ललिताङ्गक्रियात्मिकाः ।
[2]धनुर्वज्रासिशस्त्राणां प्रयोक्तव्या[3] प्रयोक्तृभिः ॥ ४६ ॥
[4]अग्रगौ पृष्ठगौ वापि ह्यनुगौ चापि योगतः ।
[5]पादयोस्तु द्विजा हस्तौ कर्तव्यौ नाट्यप्रयोक्तृभिः ॥ ४७ ॥

---

इतिकर्तव्यताशेषं विनियोगादिकं चासां दर्शयति—ललिताङ्गक्रियात्मिका इति धनुर्वज्रेत्यादि च ॥ ४६ ॥

अथ कायशोभां निरूपयन् व्यापकविनियोगं चारीणां दर्शयति—अग्रगावित्यादि ।

---

अनुवाद—अङ्गों के ललित क्रिया रूप इन आकाशिकी चारियों को कहा गया है। नाट्य-प्रयोक्ताओं को धनुष, वज्र आदि शस्त्रों के सञ्चालन में इनका प्रयोग करना चाहिए ॥ ४६ ॥

अभिनव—अब इन चारियों के शेष इतिकर्त्तव्यता एवं विनियोग आदि को दिखाते हैं। ये ललिताङ्गक्रियात्मिका चारियाँ धनुष्, वज्र आदि के अभिनय में प्रयोग की जाती है ॥ ४६ ॥

इसके बाद शरीर की शोभा का निरूपण करते हुए चारियों के व्यापक विनियोग को दिखाते हैं—

---

१. क–म. एतास्त्वाकाशगाश्चार्यो ललिताश्चरणाश्रयाः ।
२. क–म. धनुर्वज्रादिशास्त्राणां कर्त्तव्यास्तु विमोक्षणे ।
क–भ धनुःशास्त्रप्रहरणे कर्त्तव्यास्तु विचक्षणैः ।
३. क. प्रयोक्तव्या विमोक्षणे । ग. योक्तव्या शास्त्रमोक्षणे ।
इतः परं क-भ. म. पुस्तकयोः ।
सर्वासामेव चारीणां पृष्ठतस्त्वग्रतोऽपि वा ।
आकीर्णपतनं यस्याच्चारीविद्धं तु तद्भवेत् इत्यधिकं दृश्यते ।
४. ख. अग्रगौ समग्रौ वापि अनुगौ चापि योगतः ।
क-म. अग्रगौ समग्रौ वापि पुनश्चाप्यनुगौ तथा ।
क-भ. अग्रगौ समग्रौ वापि पुनश्चाप्यन्यथा हि तौ ॥
पादयोर्नत्तकैर्हस्तौ प्रयोक्तव्यौ सुसंगतौ ।
५. ख. पादयोस्तु द्विजहस्तौ कर्त्तव्यौ नाट्यप्रयोक्तृभिः ।

यतः पादस्ततो हस्तो यतो हस्तस्ततस्त्रिकम् ।
पादस्य निर्गमं[1] ज्ञात्वा तथोपाङ्गानि [2]योजयेत् ॥ ४८ ॥

---

इदं तात्पर्यम्—इह कदाचिद्गतेः प्राधान्यं, कदाचिद्धस्तव्यापारस्य, कदाचिद् द्वयोः। आद्ये पक्षे पादविक्षेपस्यानुगो तदनुसारिणौ तत्पाश्चाद्भाविनौ च हस्तौ, द्वितीये हस्तव्यापारस्यानुसारेण पश्चाद्भावेन च पादौ, तृतीये द्वयोरपि तुल्यकालताविनियोगपारतन्त्र्येण च प्रवृत्तिः। योग औचित्यम् ॥ ४७ ॥

---

अनुवाद—हे द्विजों ! नाट्य के प्रयोक्ताओं को पैरों की गति के अनुसार हाथों को पैरों के अग्रगामी अथवा पृष्ठगामी ( पोछे जाने वाले ) अथवा अनुगामी करना चाहिए ॥ ४७ ॥

अभिनव—यह तात्पर्य है कि इनमें कभी गति की प्रधानता होती है कभी हस्त व्यापार की प्रधानता होती है और कभी दोनों की प्रधानता होतो है। प्रथम पक्ष में हाथों को पादविक्षेप के अनुकूल उसका अनुसरण करने वाले तथा पादविक्षेप के बाद व्यापृत रखना होता है। दूसरे पक्ष में हस्त-व्यापार के अनुसार उनके पोछे पैरों को गति करनो चाहिए। तृतीय पक्ष में दोनों को प्रवृत्ति एक ही समय में तथा विनियोग की अपेक्षा ( परतन्त्रता ) से होंगो। यहाँ 'योग' पद का अर्थ 'औचित्य' है॥ ४७ ॥

अनुवाद—जिस तरफ पैर हो उस तरफ हाथ को करना चाहिए और जिधर हाथ हो उधर त्रिक को घुमाना चाहिए और पैर को निर्गम जानकर उसके अनुसार उपाङ्गों की योजना करनी चाहिए ॥ ४८ ॥

---

१. ग. पादस्य निर्गतिं कृत्वा। क. पादस्य तु गतिं ज्ञात्वा।
२. क-न. ततो वाङ्गानि योजयेत्।
क-म. तथाङ्गानि प्रयोजयेत् ॥

[1]पादचार्यां यथा पादो धरणीमेव गच्छति ।
एवं हस्तश्चरित्वा[2] तु कटिदेशं समाश्रयेत् ॥ ४९ ॥

---

कायशोभायोजनायेह अग्रे चात्राध्याये चार्यः प्रस्तुताः ( १०-७३ ) इति । तत्प्राधान्यं यदा भवति तदा योजना कीदृशी कार्येति स्पष्टयितुमाह यतो हस्त इति । तथेति तेनैव प्रकारेण, उपाङ्गानि भ्रूनेत्रादीनि ॥ ४८ ॥

ननु हस्तस्य क्रियायां यदि पादस्य गतिक्रिया र्तांह तद्विश्रान्तौ हस्तस्य को वृत्तान्त इत्याशङ्क्याह—पादचार्यामिति समाप्तायामिति शेषः । एवकारोऽप्यसंभावनां निरस्यति । हस्त इति ॥ ४९ ॥

---

**अभिनव**—शरीर की शोभा की योजना के लिए इस अध्याय में यहाँ और आगे चारियाँ कही गई हैं, इसलिए जब उनका प्राधान्य होता है तो उसकी कैसी योजना करनी चाहिए, यह बात स्पष्ट करने के लिए कहते हैं कि 'यतो हस्तः' इत्यादि । 'तथा' का अर्थ है उसी प्रकार से । 'उपाङ्ग' पद से भ्रू, नेत्र आदि का ग्रहण होता है ॥ ४८ ॥

**अनुवाद**--पाद चारी के प्रदर्शन के बाद जैसे ही पैर को भूमि पर रखा जाता है, उसी प्रकार हाथ का प्रदर्शन कर उसे कटि प्रदेश पर रखे ॥ ४९ ॥

**अभिनव**—यदि हाथ की क्रिया ( अभिनय ) के समय पैर की गति विश्रान्त हो जाती है तो हस्त की क्या दशा होगी ? इस प्रकार आशङ्का करके कहते हैं कि पाद-चारी के समाप्त होने पर। एवकार सम्भावना का निरास करता है। हाथ को कटिप्रदेश पर रखा जाता है ॥ ४९ ॥

---

१. ख-ग. पादचार्यां ।
२. ख. ग. एवं हस्तं चरित्वा तु ।

एताश्चार्यो[1] मया प्रोक्ता ललिताङ्गक्रियात्मिकाः[2]।
[3]स्थानान्यासां प्रवक्ष्यामि सर्वशस्त्रविमोक्षणे ॥ ५० ॥

---

अर्धचन्द्रो नाट्ये, नृत्ते तु पक्षप्रद्योतो पक्षवञ्चितावपि। पादस्य धरणीप्राप्तौ कीदृक् कायसन्निवेश इत्याशयेन स्थानकान्यभिधित्सुः पूर्वोपसंहारपूर्वकं प्रतिजानीते-एताश्चार्य इति।

ललितत्वमङ्गस्य यत इयतीभिरेव इमा उत्तानत्वे। तावानेव गतिप्रकार इति यावत्। स्थानानि भावे करणेऽधिकरणे वा व्युत्पत्त्या कायसन्निवेशाश्चार्यो उच्यन्ते। सर्वशस्त्रविमोक्षण इति साधारणो विनियोग उक्तः। आसामपि चारीणां पूर्वं गतिरूपत्वं, गतेश्च पश्चाद्भाविनी स्थितिरिति भावः ॥ ५० ॥

---

अभिनव—नाट्य में अर्धचन्द्र होता है और नृत्त में तो पक्षप्रद्योत और पक्षवञ्चिक भी होता है। पादचारी के समाप्त होने पर पैरों के भूमि पर रख देने पर शरीर का सन्निवेश कैसा होगा? इस आशय से स्थानकों को कहने की इच्छा से पूर्व कथन के उपसंहार पूर्वक प्रतिज्ञा करते हैं -

अनुवाद--अङ्गों की ललित क्रियाओं से युक्त इन चारियों को मैंने कहा है। अब समस्त शस्त्रों के मोक्षण में इनके स्थानों को कहूँगा ॥ ५० ॥

अभिनव ये चारियाँ है, क्योंकि इतनी ही चारियों से अङ्गों में लालित्य आता है। ये चारियाँ उत्तानरूप हैं। उतने ही गति प्रकार हैं। 'स्थानानि' पद भाव, करण अथवा अधिकरण अर्थ में व्युत्पन्न होने से चारियाँ कायसन्निवेश रूप कही जाती हैं। 'सर्वशास्त्रविभोक्षण' यह साधारण विनियोग कहा गया है। ये चारियाँ पहिले गति रूप होती हैं और बाद में स्थितिरूप हो जाती है, यह भाव है ॥ ५० ॥

---

१. ब एताश्चार्या मया प्रोक्ता।

२. क-म ललिताङ्गसमाश्रयाः। क-टि० ललिताङ्गक्रियाश्रयाः।

३. ब. स्थानानि संप्रवक्ष्यामि।

वैष्णवं समपादं च वैशाखं मण्डलं तथा ।
[1]प्रत्यालीढं तथालीढं स्थानान्येतानि षण् नृणाम्[2] ॥ ५१ ॥

[3]द्वौ तालावर्धतालश्च पादयोरन्तरं भवेत् ।
तयोः समस्थितस्त्वेकः त्र्यस्रः [4]पक्षस्थितोऽपरः ॥ ५२ ॥
[5]किञ्चिदञ्चितजङ्घं च सौष्ठवाङ्गपुरस्कृतम् ।
वैष्णवं स्थानमेतद्धि विष्णुरत्राधिदैवतम्[6] ॥ ५३ ॥

नृणामिति स्थानकानि तु निरूपयिष्यन्त इत्यर्थः ॥ ५१ ॥

१. वैष्णव-स्थान

अनुवाद—वैष्णव, समपाद, वैशाख, मण्डल, आलीढ़ एवं प्रत्यालीढ़ मनुष्यों के ये छः स्थानक कहे गये हैं ॥ ५१ ॥

अभिनव—'नृणाम्' अर्थात् मनुष्यों के स्थानकों का निरूपण करेंगे ॥ ५१ ॥

अनुवाद—यदि दोनों पैरों के बीच ढ़ाई ( २½ ) ताल का अन्तर हो। उनमें एक पाद समस्थित हो और दूसरा पाद त्र्यस्र ( तिरछा ) पक्ष में स्थित हो तथा जङ्घा थोड़ी झुकी हुई हो और सभी अङ्ग सौष्ठव युक्त हों तो वह 'वैष्णव-स्थान' कहलाता है। इस स्थान का अधिकारी देवता विष्णु है ॥ ५२-५३ ॥

१. ख. प्रत्यालीढ़मथालीढ़ ।
२. नर्तॄणां स्थानकानि षट् ।
३. क-भ .म. स्वभावसंस्थितस्त्वेकस्त्र्यस्रः पक्षस्थितोऽपरः ।
किञ्चित्तयाञ्चिता जङ्घा समुन्नतमुरस्तथा ॥
हनुशीर्षे समे चैव कर्णादण्टाङ्गुले स्थिते ।
उरःस्थानाच्च चिबुकं चतुरङ्गुलसंस्थितम् ॥
कटकस्त्रिपताको वा दक्षिणो नाभिसंस्थितः ।
त्रिपताकोऽर्धचन्द्रो वा वामः कटितटाश्रितः ॥
पादयोरन्तरं यत्तत्तलद्वयमितं भवेत् ।
ज्ञेयं तद्वैष्णवस्थानं कार्यमुत्तममध्यमयोः ॥
स्थानेनानेन कर्त्तव्यः संल्लापस्तु स्वभावजः ।
शेषं कार्यमनेनैव यदवस्थेन कर्मणा ॥
४. ख-ग. त्र्यस्रपार्दास्थितीऽपरः ।
५. ख. किञ्चिदाञ्चितजङ्घोऽसौ सौष्ठवाङ्गसमन्वितः ।
६. ग. विष्णुरेवाधिदैवतम् ।

स्थानेनानेन कर्त्तव्यः संल्लापस्तु स्वभावजः[1] ।
[2]नानाकार्यान्तरोपेतैर्नृभिरुत्तममध्यमैः ॥ ५४ ॥

[3]चक्रस्य मोक्षणे[4] चैव धारणे धनुषस्तथा[5] ।
[6]धैर्यदानाङ्गलीलासु तथा क्रोधे प्रयोजयेत् ॥ ५५ ॥

---

पक्षस्थित इति पार्श्वाभिमुखाङ्गुलिः । त्र्यश्र इति किञ्चिदग्राभिमुख्यम-स्पृशत् । अञ्चिता कुटिला जानुनमनाज्जङ्घा यत्र । सौष्ठवे यदङ्गं वक्ष्यते तेन पुरस्कृतं पूजितम्, अप्रधाने वा अङ्गे सौष्ठवं पुरस्कृतं प्रधानम् । हि यस्मात् विष्णुरत्र ाधिदैवतम् तस्माद्वैष्णवम् । तेन तस्य तादृशस्य वाऽस्त्रीप्रधानस्य सूत्रधारादेः प्रयोगे स्थानकमिदम् । एवमुत्तरत्र मन्तव्यम् ॥ ५३ ॥

एतदेवाह—स्थानेनानेनेति स्वभावजः अनावेशितः ॥ ५४ ॥

---

**अभिनव**—'पक्षःस्थित' पद से पार्श्वाभिमुख अङ्गुलियाँ अभिप्रेत हैं। 'त्र्यस्र' पद किञ्चित् आभिमुख्य स्पर्श का बोधक है। 'अञ्चित' पद का अर्थ कुटिल है। जानु के झुकने से जङ्घा अञ्चित हो जिसमें। सौष्ठव में जिस अङ्ग को कहेंगे, उस अङ्ग से पुरस्कृत अर्थात् पूजित। यदि अङ्ग अप्रधान है तो सौष्ठव पुरस्कृत ( प्रधान ) है। क्योंकि इस स्थान का अधिदेवता विष्णु है इसलिए यह वैष्णव स्थानक है। इसलिए स्त्री की प्रधानता से रहित सूत्रधार आदि के प्रयोग में यह स्थानक होता है इसी प्रकार आगे भी समझना चाहिए ॥ ५२-५३ ॥

**अनुवाद—इस स्थान के द्वारा नाना प्रकार के कार्यों में संलग्न उत्तम और मध्यम प्रकृति के पुरुषों को स्वाभाविक संलाप करना चाहिए ॥ ५४ ॥**

**अभिनव**—इसी बात को कहते हैं इस स्थान से। 'स्वभावतः' का अर्थ आवेश-रहित है ॥ ५४ ॥

---

१. क-न. प्रभावतः
२. ख. नानाकार्यान्तरोपेतो ।
३. क-न. 'चक्रस्य' इत्यारभ्य 'योजितम्' इति यावत् सार्द्धत्रयश्लोकाः न सन्ति ।
४. ख. मोक्षणं ।
५. क-च. धनुषि स्थिते ।
६. ख. धैर्यदानाङ्गलीलासु ।

इदमेव विपर्यस्तं प्रणयक्रोध[1] इष्यते ।
उपालम्भकृते चैव [2]प्रणयोद्वेगयोस्तथा ॥ ५६ ॥

शङ्कासूयोग्रताचिन्तामतिस्मृतिषु चैव हि ।
दैन्ये [3]चपलतायोगे गर्वाभीष्टेषु शक्तिषु ॥ ५७ ॥
शृङ्गाराद्भुतबीभत्सवीरप्राधान्ययोजितम्[4] ।
[5]समपादे समौ पादौ तालमात्रान्तरस्थितौ ॥ ५८ ॥
स्वभावसौष्ठवोपेतौ ब्रह्मा चात्राधिदैवतम् ।

---

अनुवाद—चक्र के मोक्षण ( फेंकने ) में, और धनुष के धारण करने में, धैर्य, दान, शारीरिक लीला ( गति ) में और क्रोध में इस स्थानक की योजना करनी चाहिए ॥ ५५ ॥

अनुवाद—इसी स्थानक के विपर्यस्त अर्थात् विपरीत प्रदर्शन से प्रणय-कोप, उपालम्भ, प्रणयोद्वेग, शङ्का, असूया, उग्रता, चिन्ता, मति, स्मृति, दैन्य, चपलता, गर्व और अभीष्ट शक्तियों के योग आदि भावों का प्रदर्शन तथा शृङ्गार, वीर, अद्भुत, बीभत्स रसों की प्रधानता का प्रदर्शन किया जाता है ॥ ५६-५८ (१) ॥

## २. समपाद स्थान

अनुवाद—एक ताल के अन्तर से अवस्थित तथा स्वाभाविक सौष्ठव से युक्त दोनों सम पादों का प्रयोग 'समपाद' स्थानक में होता है। इस स्थानक का देवता ब्रह्मा हैं ॥ ५८-५९ (१) ॥

---

१. क-ग. प्रणयः कोपः ।
२. ख-ग प्रकर्षाधिबलस्तथा ।
३. क. ग. दैन्ये चपलतायां च ।
४. ख. योषितम् ।
५. क-भ. म. पद्भ्यां तालान्तरस्थाभ्यां समपादं प्रकीर्त्तितम् ।

अनेन कार्यं स्थानेन विप्रमङ्गलधारणम्[1] ॥ ५९ ॥

[2]रूपणे पक्षिणां चैव वरं [3]कौतुकमेव च ।

[4]खस्थानां स्यन्दनस्थानां विमानस्थायिनामपि ॥ ६० ॥

लिङ्गस्थानां व्रतस्थानां स्थानमेतत्तु[5] कारयेत् ।

---

विप्रमङ्गलेति विप्रैः क्रियमाणं यन् मङ्गलाशीर्वचनादि तस्य धारणं प्रतीप्सन्। खस्थादीनामिदं स्थानकम् । लिङ्गस्थाः शैवाद्याः व्रतस्था ऊर्ध्वंकायादिप्रतताङ्गाः ॥ ६१ ॥

---

अनुवाद—इस स्थान के द्वारा ब्राह्मणों का आशीर्वचन धारण करना चाहिए। पक्षियों के निरूपण में और वर के कौतुक के निरूपण में, आकाश में स्थित दिव्य पुरुषों एवं रथ पर बैठने वाले और विमान पर चलने वाले के अभिनय में तथा लिङ्गस्थ अर्थात् शैव सन्यासियों एवं व्रतियों अर्थात् ऊर्ध्वंकाय तथा फैफे हुए अङ्ग वाले योगियों के अभिनय में इस स्थानक का प्रयोग करना चाहिए ॥ ५९-६१ (१) ॥

अभिनव—'विप्रमङ्गल' पद का अर्थ है ब्राह्मणों के द्वारा क्रियमाण मङ्गलमय आशीर्वचन। उसे ग्रहण करना चाहिए। 'खस्थानाम्' का अभिप्राय है कि आकाश में स्थित रहने वाले दिव्य पुरुष उनके लिए यह स्थानक है। 'लिङ्गस्थ का अर्थ है शैव आदि सन्यासी। 'व्रतस्थ' का अर्थ है ऊर्ध्वकाय और फैले हुए अङ्ग वाले व्रती (योगी) ॥ ५९–६९ ॥

---

१. ख ग. अनेन कार्यं स्थानेन विप्रमङ्गलकारणम्।
   क-म. अनेन कार्या स्थानेन विप्रमङ्गलसत्क्रिया ।

२. क-म. कर्त्तव्यं स्यादनेनैव वरकौतुकमङ्गलम् ।

   ख ग. रूपं पक्षिणां चैव परं कौतुकमेव च ।

४. ख. ग. स्वस्थानां ।

५. क-म. समपादं प्रयोजयेत् ।

[1]तालास्त्रयोऽर्धतालश्च पादयोरन्तरं भवेत् ॥ ६१ ॥
[2]तालांस्त्रीनर्धतालांश्च निषण्णोरुं प्रकल्पयेद् ।

त्र्यस्रौ[3] वक्षःस्थितौ चैव तत्र पादौ[4] प्रयोजयेत् ॥ ६२ ॥
[5]वैशाखस्थानमेतद्धि स्कन्दश्चात्राधिदैवतम् ।

कियत्याकाशदेश इत्याह—तालास्त्रयोऽर्धतालाश्चेति सार्धतालत्रयादधो नभोदेश इत्यर्थः। निषण्णावचलौ विश्रान्तौ तु ऊरू यत्र सूच्यपेक्षया। विशाखः स्कन्दः। व्याप्याङ्गानामेव युद्धादौ निर्गमनात् तेषामेव वेगादानपार्ष्णिचोदनाक्रमेण ॥ ६१-६२ (१) ॥

## ३. वैशाख-स्थान

अनुवाद—यदि दोनों पैरों के मध्य साढ़े तीन ( ३½ ) ताल का अन्तर हो और साढ़े तीन ताल के अन्तर पर ऊरु सूची चारी की अपेक्षा से विश्रान्त हो, और त्र्यस्र अर्थात् तिरछा एवं पक्ष ( पार्श्व ) में स्थित दोनों पैरों का प्रयोग करें तो 'वैशाख-स्थान' कहा जाता है। इस स्थानक का अधिदेवता स्कन्द (कार्त्तिकेय) है ॥ ६१-६२ (१) ॥

अभिनव—'तालास्त्रयोऽर्धतालाश्च' का अर्थ है साढ़े तीन तालो से नीचे आकाश प्रदेश में। 'निषण्णोरु'पद का अभिप्राय है कि ऊरु सूची की अपेक्षा जहाँ विश्रान्त हो। 'विशाख' का अर्थ 'स्कन्द' है। व्याप्य अङ्गों का ही युद्ध आदि में निर्गमन से उन्हीं का वेग-ग्रहण और पार्ष्णि की प्रेरणा से पाद-क्रमण होता है। ॥ ६१-६२ (१) ॥

१. क-म. द्वौ तालावर्धतालश्च पादयोरन्तरं भवेत् ।
२. क-म तालास्त्रयोऽर्धतालश्च निषण्णोरु प्रवर्त्तयेत् ।
क-भ. ताल स्त्रयोऽर्धतालश्च निषण्णार्धस्तथैव च ।
३. क. (टि०) अस्रौ पक्षस्थितौ चैव कटी जानुसमौ तथा ।
धनुर्वज्रादिशस्त्राणां तत्र पादौ प्रयोजयेत् ॥
४. क-द. पादावत्र प्रयोजयेत् ।
५. क-म, वैशाखं नाम तत्स्थानं स्कन्दस्तस्याधिदैवतम् ।

स्थानेनानेन कर्तव्यमश्वानां[1] वाहनं बुधैः ॥ ६३ ॥
व्यायामनिर्गमश्चैव [2]स्थूलपक्षिनिरूपणम् ।
[3]शरासनसमुत्कर्षे व्यायामकरणे[4] तथा ॥ ६४ ॥
रेचकेषु च कर्तव्यमिदमेव प्रयोक्तृभिः ।
[5]ऐन्द्रे तु मण्डले पादौ चतुस्तालान्तरस्थितौ ॥ ६५ ॥
[6]त्र्यस्त्रौ पक्षःस्थितौ चैव कटिजानू समौ तथा ।
[7]धनुर्वज्रासिशस्त्राणि मण्डलेन प्रयोजयेत् ॥ ६६ ॥
वाहनं [8]कुञ्जराणां तु स्थूलपक्षिनिरूपणम्[9] ।

---

अनुवाद—इस स्थानक के द्वारा विद्वानों को अश्वों का वाहन करना चाहिए । तथा व्यायाम युद्ध आदि से निर्गमन, स्थूल पक्षियों के निरूपण, बाणों के प्रक्षेपण, तथा व्यायायाम करने में और रेचकों के अभिनय में विद्वानों को इस स्थानक का प्रयोग करना चाहिए ॥ ६३-६५ (१) ॥

---

१. क-म. कर्त्तव्यं हयानां ।
२. ग. स्थूलपक्षनिरूपणम् । क-म प्रयोगो धनुषस्तथा ।
३. क-ङ. शराणां च समुत्क्षेपं ।
४. ख. व्यायामकृत एव च । क. व्यायामकृतमेव च ।
५. ख. ऐन्द्रं तु मण्डलं पादौ ।
६. ख.ग. त्र्यस्त्रौ वक्षःस्थितौ चैव कठिजानू समौ तथा ।
क-म. कटी जानुसमा चैव करौ पक्षस्थितौ तथा ।
७. क. ग धनुर्वज्राणि शस्त्राणि मण्डलेन प्रयोजयेत् ।
ख. धनुर्वज्रादिशस्त्राणां मण्डलेन प्रयोजयेत् ।
क-म. धनुर्वज्र प्रहरणं मण्डलेन तु योजयेत् ।
८. ग. कुञ्जरादीनां ।
९. क-म. स्थूलपक्षतिरूपणम् । क-ढ. स्थूलपक्षनिरूपणम् ।

अस्यैव दक्षिणं पादं पञ्च तालान् प्रसार्य तु ॥ ६७ ॥
[1]आलीढ़स्थानकं कुर्याद् रुद्रश्चात्राधिदैवतम् ।

---

ऐन्द्रे त्विति शेषं द्योतयन् सार्धतालद्वयान्तरनभोदेशनिषण्णोरुत्वमत्रापि सूचयति । मण्डलेश्वरविषयत्वान्मण्डलम् । अश्वानां वाहने वैशाखं, इव तु हस्तिनां, तेभ्यः स्थूलानामिति प्रक्रमात् स्थूलाः पक्षिणोऽत्र गरुडादयो मन्तव्याः । ॥ ६५-६७ (१) ॥

---

### ४. मण्डल-स्थान

अनुवाद—ऐन्द्र मण्डल में चार तालों के अन्तर पर स्थित दोनों पैर त्र्यस्र (तिरछे) और पक्ष (पार्श्व) में स्थित होते हैं और कटि एवं जानु सम समान अवस्था में रखे जाते हैं । धनुष, वज्र, असि ( तलवार ) आदि शस्त्रों के चलाने में, हथियों के वाहन तथा स्थूल पक्षियों के निरूपण में मण्डल-स्थानक का प्रयोग करना चाहिए ॥ ६५-६७ (१) ॥

अभिनव—'ऐन्द्रे तु' से शेष अर्थ का द्योतन करते हुए $2\frac{1}{2}$ ताल के अन्तर से नभ प्रदेश में निषण्णोरु को सूचित करता है । मण्डलेश्वर के विषय में होने से इस स्थानक का नाम मण्डल-स्थान है । अश्वों के वाहन में वैशाखस्थान का प्रयोग होता है और हाथियों के वाहन में मण्डल-स्थान का प्रयोग होता है । उनसे भी स्थूलों के वाहन मे ऐसा प्रक्रम करने से स्थूल पक्षी से यहाँ गरुड़ आदि का ग्रहण करना चाहिए ॥ ६५–६७ (१) ॥

### ५. आलीढ़-स्थान

अनुवाद—इसी मण्डल-स्थानक के दक्षिण पाद को पाँच तालों के अन्तर पर फैलाकर 'आलीढ़-स्थान' का प्रयोग करना चाहिए । इस स्थानक का अधिदेवता रुद्र है ॥ ६७–६८ ॥

---

१. क-भ अलीढ़स्थानमेतत्तु विज्ञेयं नाट्यकर्मणि ।

अनेन कार्यं स्थानेन [1]वीररौद्रकृतं तु यत् ॥ ६८ ॥

उत्तरोत्तरसंजल्पो रोषामर्षकृतस्तु[2] यः ।

मल्लानाञ्चैव [3]संफेटः शत्रूणां च निरूपणम् ॥ ६९ ॥

[4]तथाभिद्रवणं चैव शस्त्राणां चैव मोक्षणम् ।

[5]कुञ्चितं दक्षिणं कृत्वा वामं[6] पादं प्रसार्य च ॥ ७० ॥

[7]आलीढपरिवर्तस्तु प्रत्यालीढमिति स्मृतम् ।

---

अयैवेति निषण्णोरुत्वं तथा त्र्यश्रत्वं द्वयोः सूचयति । आसमन्ताल्लीढ़ा स्पृष्टा भूमिर्येनेत्यालीढ़म् । संफेटः संघर्षः ॥ ६७-७० (१) ॥

---

अनुवाद—इस आलीढ़-स्थानक के द्वारा वीर और रौद्र रस के व्यञ्जक सभी कार्य और रोष एवं अमर्ष में किये गये उत्तरोत्तर कथनोपकथन ( उत्तर-प्रत्युत्तर ) तथा मल्लों और प्रतिमल्लों का संघर्ष, शत्रुओं का निरूपण, अभिद्रवण अर्थात् पलायन और शस्त्रों का मोक्षण (फेंकना) आदि का प्रदर्शन करना चाहिए ॥ ६८-७० (१) ॥

अभिनव—'अस्यैव' पद के कहने से निषण्णोरुत्व और त्र्यस्रत्व दोनों सूचित होता है । चारों ओर से भूमि का स्पर्शन जिससे हो वह 'आलीढ़' है ) । 'संफेट' का अर्थ 'संघर्ष' है ॥ ६७-७० (१) ॥

---

१ क-म. रौद्रवीरकृतं तु ।

२. क न. रोषामर्षकृताश्रयः । क-म. रोषामर्षसमुद्भवः ।

३. क न. सस्फोटः ।

४. क-म तथा विद्रवणं चैव शस्त्राणां च विमोक्षणम् ।
क न. तथ हिद्रवणं चैव शस्त्राणां त्रिभोक्षणम् ।

५. क ग. अञ्चितं ।

६. क. वाम पादं ।

७. क-म. परिवर्ते यः प्रत्यालीढ तु तत्स्मृतम् ।

[1]आलीढसंहितं शस्त्रं प्रत्यालीढेन मोक्षयेत्[2] ॥ ७१ ॥
नानाशस्त्रविमोक्षो हि कार्योऽनेन[3] प्रयोक्तृभिः ।

---

आलीढ़परिवर्तं इतीयदेव लक्षणं पूर्वमुक्तम्, तु पदं इतिकर्त्तव्यतास्पष्ट-करणार्थम् । कुञ्चितमिति प्रसारणविपरीतं भूय उत्तानाकुञ्चितोऽत्र पादः ॥ ७१ ॥

ननु प्रयोक्तृभिः शस्त्रविमोक्षः कार्यं इत्युक्तम् । तस्य प्रयोक्तृभिः न्यायान्यायात् व्यायामाच्चेति नामानुसारादेषां वृत्तिविभागे परिशेषता । ॥ ७२ (१) ॥

---

### ६. प्रत्यालीढ़-स्थान

**अनुवाद**—यदि दाहिने पैर को कुञ्चित करके और बायें पैर को फैला-कर आलौढ़-स्थान का परिवर्त्तन कर दिया जाय तो 'प्रत्यालीढ़' स्थानक होता है ॥ ७०-७१ (१) ॥

**अनुवाद**—आलोढ़-स्थान में जिन शस्त्रों का सन्धान किया जाता है प्रत्यालीढ़-स्थानक के द्वारा उनका मोक्षण करना चाहिए। नाट्यप्रयोक्ताओं को इस स्थानक के द्वारा अनेक प्रकार के शस्त्रों का मोक्षण (प्रक्षेपण) करना चाहिए ॥ ७१-७२(१) ॥

**अभिनव**—'आलीढ़ परिवर्त्त' इतना ही लक्षण पहिले कहा गया है। 'तु' पद इतिकर्त्तव्यता को स्पष्ट करने के लिए है। 'कुञ्चित' पाद का आशय है कि प्रसारण के विपरीत उत्तान और आकुञ्चित पाद इसमें रहता है ॥ ७०-७१ ॥

**अभिनव**—अब प्रश्न है कि नाट्य-प्रयोक्ताओं को शस्त्र का मोक्षण करना चाहिए, यह आपने पहिले कहा है। इसी में सहायक न्याय है अतः न्यायों के अनुसार वृत्ति विभाग में इनको परिशेषता है ॥ ७२ ॥

---

१. क-ख. अलीढ़सहितं । क-म. आलीढ़सन्धितं ।

२. क म. मोचयेत् ।

३. क म. कार्यो व्यायामयोगतः ।

न्यायाश्चैव हि विज्ञेयाश्चत्वारः शस्त्रमोक्षणे ॥ ७२ ॥
भारतः सात्वतश्चैव वार्षगण्योऽथ कैशिकः[1] ।
[2]भारते तु कटीच्छेद्यं पादच्छेद्यं तु सात्वते ॥ ७३ ॥
वक्षसो वार्षगण्ये तु [3]शिरश्छेद्यन्तु कैशिके ।
एभिः प्रयोक्तृभिर्न्यायैर्नानाचारोसमुत्थितैः[4] ॥ ७४ ॥
[5]प्रविचारा प्रयोक्तया नानाशस्त्रविमोक्षणे ।

---

आरभट्या वार्षगण्यः । कटिच्छेद्यमिति भावे कृत्यः । कटीस्थानादिषु परस्य हन्तव्येष्वति क्रमेण चत्वारः ॥ ७३ ॥

एभिरिति एभिर्न्यायैरुपलक्षिताः । शस्त्रमोक्षणविषयाः प्रविचाराः प्रकृष्टाः विचित्रा चारा गतिविशेषाः । प्रयोक्तव्या इति ? चारोव्यायामकरणखण्डमण्डलात्मकाः कार्याः ॥ ७५ (१) ॥

---

अनुवाद नाना प्रकार के शस्त्रों के मोक्षण में चार प्रकार के न्याय कहे गये हैं—भारत, सात्त्वत, वार्षगण्य और कौशिक ये चार न्याय है ॥ ७२-७३ (१) ॥

अनुवाद—भारत में कटि पर सात्त्वत में पैर पर, वार्षगण्य में वक्षःस्थल पर और कौशिक में शिर पर अस्त्र-प्रहार का प्रयोग करना चाहिए ॥७३-७४ (१)॥

अभिनव—आरभटी वृत्ति के अनुसार वार्षगण्य का प्रयोग करना चाहिए। 'कटिच्छेद्य' में भाव अर्थ में कृत्य (यत्) प्रत्यय हुआ है। अतः हन्तव्य कटो, पाद, वक्ष एवं शिर आदि स्थानों पर अतिक्रमण से चार न्याय कहे गये हैं ॥ ७३-७४ (१) ॥

अनुबाद—नाट्य प्रयोक्ताओं को नाना प्रकार कौ चारियों से निर्मित इन न्यायों से उपलक्षित अनेक शस्त्रों के चलाने के प्रसङ्ग में विशिष्ट गतियों से चलना ( पाद-प्रचार करना ) चाहिए ॥ ७४ ॥

अभिनव—'एभिः' पद का अभिप्राय है न्यायों से उपलक्षित। शास्त्रमोक्षण विषयक प्रविचार अर्थात् प्रकृष्ट विचित्र गति-विशेष। 'प्रयोक्तव्यः' का तात्पर्य है चारी, व्यायाम, करण, खण्ड, मण्डल आदि का प्रयोग करना चाहिए ॥ ७४ ॥

---

१. क-म, वार्षगण्यः सकैशिकः ।
२. ख-ग. भारते तु कटिच्छेदं पादच्छेदं तु सात्त्वते ।
३. क-म वक्षसो वार्षगण्ये हृच्छिरःश्छेद्यं तु कैशिके ।
४. क-द, न्याये नानाचारीसमन्विते ।
५. ख. प्रविचार्यं प्रयोक्तव्यो ।

[1]न्यायाश्रितैरङ्गहारैर्न्यायाच्चैव समुत्थितैः ॥ ७५ ॥

यस्माद् युद्धानि वर्तन्ते [2]तस्मान् न्यायाः प्रकीर्तिताः [3]।

[4]वामहस्ते विनिक्षिप्य खेटकं दक्षिणेन च ॥ ७६ ॥

शस्त्रमादाय हस्तेन प्रविचारमथाचरेत् [5]।

---

न्यायशब्दस्यार्थं वर्शयति न्यायाश्रितैरिति न्यायेनाङ्गौचित्येन यान्यङ्गोदाहरणादि न्यायादेव च परबन्धनस्वभाविताप्तिरूपात् प्रवर्तितानि तैः। यत एतयोः क्रिया। अतो न्यायाख्याः ॥ ७५-७६ (१) ॥

---

अनुवाद—अङ्गहार न्यायों के आश्रित हैं और न्यायों से ही समुत्थित हैं, अर्थात् न्याय से ही ये उत्पन्न होते हैं। इन्हीं से समुपस्थित युद्ध का नयन होता है। इसलिए ये न्याय कहलाते हैं ॥ ७५-७६ (१) ॥

अभिनव—न्याय शब्द का अर्थ दिखाते हैं—'न्यायाश्रितैरित्यादि'। अङ्गों के औचित्य से न्याय का आश्रय लिया जाता है। जो अङ्गों के उदाहरण आदि हैं वे सब पर बन्धन स्वभाव ( स्वरूप ) प्राप्त होने वाले न्यायों से ही प्रवर्त्तित होते है, उन्हीं से इनकी क्रिया होती है, इसलिए ये न्याय कहे जाते हैं ॥ ७६ ॥

अनुवाद—बायें हाथ में खेटक अर्थात् ढ़ाल लेकर और दाहिने हाथ में शस्त्र को लेकर रङ्गमञ्च पर विचरण करे अर्थात् भ्रमण करे ॥ ७६-७७ ॥

---

१. ख. न्यायाश्रितैः। क-म न्याय्याश्रितैः।

२. ख-म. नोयन्ते।

३. क-ग. प्रवर्त्तिताः।

४. ख-ग. वामहस्तेन निक्षिप्य खेटकं दक्षिणेन च।

क-द. वामहस्ते विनिक्षिप्य खेटकं शस्त्रफेटकम्।

दक्षिणे च करे शस्त्रं प्रविचारमथाचरेत्।

५. क-न. प्रविचारमथारभेत्।

क-म. प्रविचारं प्रयोजयेत्।

[1]प्रसार्य च करौ सम्यक् पुनराक्षिप्य[2] चैव हि ॥ ७७ ॥
खेटकं भ्रामयेत् पश्चात् पार्श्वात् पार्श्वमथापि च ।
शिरःपरिगमश्चापि कार्यः शस्त्रेण योक्तृभिः ॥ ७८ ॥
[3]कपोलस्यान्तरे वापि[4] शस्त्रस्योद्वेष्टनं[5] तथा ।
पुनश्च[6] खड्गहस्तेन ललितोद्वेष्टितेन[7] च ॥ ७९ ॥
खेटकेन च कर्तव्यः शिरःपरिगमो बुधैः ।
एवं प्रचारः कर्तव्यो भारते शस्त्रमोक्षणे ॥ ८० ॥

---

अथापि चेत्यनन्तरं चेत्यर्थः । परिवेष्टनेन गमनं नयनं परिगमः । मणिबन्धोद्वेष्टनेन शस्त्रस्योद्वेष्टनम् । उद्वेष्टितेनेति उद्वेल्लितेनेति ॥ ७८-८० ॥

---

अनुवाद – फिर दोनों हाथों को अच्छी तरह फैलाकर फिर आक्षिप्त करके ( खींचकर ) खटक ( ढ़ाल ) को पोंछे, फिर इस पार्श्व से उस पार्श्व में अर्थात् अगल-बगल में घुमावे, फिर नाट्यप्रयोक्ता शिर के चारों ओर शस्त्र को घुमाये, फिर कपोल के समीप शस्त्र का उद्वेष्टन करे, फिर हाथ में तलवार लेकर और बायें हाथ में ढाल लेकर ललित उद्वेष्टन प्रक्रिया से शिर के चारों ओर घुमाये। इस प्रकार भारत न्याय में शास्त्र-मोक्षण के प्रसङ्ग में विद्वानों को रङ्गमञ्च पर विचरण अर्थात् विशिष्ट गति से चलना चाहिए ॥ ७७-८० ॥

अभिनव—यहाँ 'अथापि च' का अर्थ है और इसके अनन्तर परिवेष्टन के साथ 'गमन' (नयन) अर्थात् ले जाना 'परिगम' है। यहाँ मणिबन्ध (कलाई) में उद्वेष्टन करके शस्त्र का उद्वेष्टन होता है। 'उद्वेष्टन' का अर्थ उद्वेलित करना है ॥ ७७–८० ॥

---

१. क-प. करौ प्रसारितौ कृत्वा ।
२. ग. पुनरावर्त्य चैव हि । क-म. आक्षिप्य तदनन्तरम् ।
३. ग. कपोलांसान्तरे ।
४. ख. ग. चापि । क-म. चैव ।
५. क. ग. शस्त्रस्योद्घट्टनं तथा ।
६. क–म. तथा शृङ्गारहस्तेन ।
७. ग. ललितोद्वर्तितेन च ।

[1]सात्त्वते च प्रवक्ष्यामि प्रविचारं यथाविधि ।
स एव प्रविचारस्तु खड्गखेटकयोः स्मृतः ॥ ८१ ॥
केवलं पृष्ठतः शस्त्रं कर्तव्यं खलु सात्त्वते ।
गतिश्च वार्षगण्येऽपि सात्त्वतेन क्रमेण तु ॥ ८२ ॥
[2]शस्त्रखेटकयोश्चापि भ्रमणं संविधीयते ।
शिरः[3] परिगमस्तद्वच्छस्त्रस्येह भवेत्तथा ॥ ८३ ॥
उरस्युद्वेष्टनं कार्यं शस्त्रस्यांसेऽथवा[4] पुनः ।

पृष्ठत इति कायस्य पश्चाद्भागे ॥ ८२ ॥

## २. सात्त्वत

अनुवाद--अब मैं यथाविधि सात्त्वत न्याय में होने वाली गति बतलाऊँगा। शस्त्र और ढाल के विषय में भी वही प्रविचार ( विशिष्ट चाल ) कहा गया है। जो भारत न्याय में कहा गया है। सात्त्वत में केवल पीछे से शस्त्रों का घुमाना होता है ॥ ८१-८२ (१) ॥

अभिनव—'पृष्ठतः' का अर्थ है शरीर के पीछे का भाग।

## ३. वार्षगण्य

अनुवाद – वार्षगण्य न्याय में भी सात्त्वत के क्रमानुसार ही गति ( चाल ) होती है। इसमें शस्त्र ( तलवार ) और ढाल को साथ-साथ घुमाया जाता है और इसमें इस शस्त्र को शिर पर घुमाया जाता है। फिर उस शस्त्र का वक्षःस्थल पर अथवा कन्धे पर उद्वेष्टन करना चाहिए ॥ ८२-८३ ॥

१. क–म. सात्त्वते तु प्रविचारं व्याख्यास्याम्यनुपूर्वशः ।
२. ग. खड्गखेटकयोश्चापि ।
३. ख. ग. शिरःपरिगमादस्मिंस्तस्य शस्त्रस्य केवलम् ।
४. ख. शस्त्रस्याङ्गेन वा पुनः ।

भारते [1]प्रविचारोऽयं कर्तव्यः स तु कैशिके ॥ ८४ ॥
[2]विभ्रमय्य तथा शस्त्रं केवलं मूर्ध्नि पातयेत् ।
प्रविचारा[3] प्रयोक्तव्या ह्येवमेतेऽङ्गलीलया ॥ ८५ ॥
[4]धनुर्वज्रासिशस्त्राणां प्रयोक्तव्या विमोक्षणे ।
न भेद्यं नापि तु च्छेद्यं न चापि रुधिरस्रुतिः ॥ ८६ ॥
[5]रङ्गे प्रहरणे कार्यो न चापि व्यक्तघातनम् ।
[6]संज्ञामात्रेण कर्तव्यं शस्त्राणां मोक्षणं बुधैः ॥ ८७ ॥
अथवाभिनयोपेतं कुर्याच्छेद्यं विधानतः ।

---

युद्धप्रसङ्गेन सर्वं प्रयोज्यमापततीत्याशङ्क्याह—न भेद्यमिति ।

---

## ४. कैशिक

अनुवाद —भारत न्याय में जो प्रविचार ( विशिष्ट चाल ) किये जाते हैं वही कौशिक न्याय में भी करने चाहिए। इसमें अन्त में केवल शस्त्र को मस्तक पर घुमाकर गिराया जाता है। इस प्रकार शरीर को लीला से प्रविचार ( चाल, गति ) का प्रयोग करना चाहिए। धनुष, वज्र, तलवार आदि शस्त्रों के मोक्षण (चलाने) में इसका प्रयोग करना चाहिए ॥ ८४-८६ (१) ॥

अभिनव—युद्ध के प्रसङ्ग में मार-काट आदि सब कुछ हो सकता है, इस प्रकार आशङ्का करके कहते है—'न भेद्यमित्यादि' ।

---

१. क. भारते प्रविचारो यः ।
२. क-भ. म. केवलं विभ्रमय्यास्त्रं शिरोदेशे प्रयोजयेत् ।
एवमेतं प्रविचाराः प्रयोज्यास्त्वङ्गलीलया ।
शस्त्रे धनुषि वज्रे च नानाविधविमोक्षणे ॥
३. ख. प्रविचाराश्च कर्त्तव्याः । क-द. प्रविचाराः प्रकर्त्तव्या ।
४. ख. धनुर्वज्रादिशस्त्राणां ।
५. ग. रङ्गे प्रहरणं कार्यं । ख. रङ्गप्रहरणे कार्यं ।
६. ग. संज्ञामात्रेण कर्त्तव्यं । क-म. संज्ञामात्रे प्रयोक्तव्यं ।

[1]अङ्गसौष्ठवसंयुक्तैरङ्गहारैर्विभूषितम् ॥ ८८ ॥
व्यायामं कारयेत् सम्यक् लयतालसमन्वितम् ।
[2]सौष्ठवे हि प्रयत्नस्तु कार्यो व्यायामसेविभिः ॥ ८९ ॥

---

भावे प्रत्ययः । संज्ञामात्रेणेति । यथा परो जानाति युध्येते इमाविति । एवं त्विमावित्यादिविषयं विधाय नाटकादौ संज्ञामात्रेणापि; तेन नानुचितमिति दर्शयति । अथवा व्यवस्थितविकल्पः ॥ ८६-८८ (१) ॥

---

अनुवाद—इस प्रकार रङ्गमञ्च पर प्रहरण ( युद्ध ) में न भेदन होना चाहिए, न छेदन होना चाहिए, न रक्त का स्राव ( बहना ) होना चाहिए और न स्पष्ट आघात होना चाहिए, विद्वानों को केवल संज्ञामात्र इशारे से शस्त्रों का मोक्षण करना चाहिए अथवा अभिनय से उपेत (युक्त) छेदन नाट्य-विधान के अनुसार करना चाहिए ॥ ८६-८८ (१) ॥

अभिनव—यहाँ 'भेद्यम्' इत्यादि में भाव अर्थ में कृत्यु प्रत्यय हुआ है । संज्ञामात्रेण अर्थात् संज्ञामात्र से अर्थात् केवल चेष्टा ही ऐसी करनी चाहिए, जिससे दूसरे यह समझें कि ये दोनों इस प्रकार युद्ध कर रहे हैं । इत्यादि । इस विषय या प्रसङ्ग को नाटक आदि में संकेत मात्र से दिखाना चाहिए । इसलिए यह अनुचित नहीं है यह दिखाते हैं । अथवा पद व्यवस्थित विकल्प को सूचित करता है ॥८६–८८ (१)॥

## सौष्ठव

अनुवाद—सौष्ठव से युक्त अङ्गों से अङ्गहारों से विभूषित तथा ताल एवं लय से समन्वित व्यायाम (चारी) को प्रदर्शित करे । अतः व्यायाम-सेवियों को सौष्ठव में प्रयत्न करना चाहिए । ॥ ८८-८९ ॥

---

१. ख. अङ्गैः सौष्ठवसंयुक्तैः । क–म. अङ्गसौष्ठवसंयुक्तं ।

२. क-न. सौष्ठवेऽतिप्रयत्नस्तु कार्यो व्यायामवेदिभिः ।
क–म. प्रयत्नः सौष्ठवे कार्यः बुधैर्व्यायामयोगतः ।
ख. सौष्ठवेन तु यत्नस्तु कार्यो व्यायामसेविभिः ।

[1]सौष्ठवे लक्षणं प्रोक्तं बर्तनाक्रमयोजितम् ।
शोभा सर्वैव नित्यं हि सौष्ठवं समुपाश्रिता ॥ ९० ॥
अचञ्चलमकुब्जं चासन्नगात्रमथापि[2] च ।
नात्युच्चं चलपादञ्च सौष्ठवाङ्गं प्रयोजयेत् ॥ ९१ ॥

---

अङ्गसौष्ठवं तदुक्तं तस्य सिद्धये परिकरमाह—व्यायाममिति । व्यायामोऽङ्गशिक्षाभ्यासव्यासङ्गयोग्यकाल एव । एवं द्रुतादेः । चञ्चत्पुटादेश्चानुसन्धेरङ्गमात्मीकृतन्तालाख्यं पठ्यते ॥ ८९ ॥

सन्नं स्वविश्रान्तिपरिणतं गात्रं यस्य ॥ ९१ ॥

---

अभिनव—जिसे अङ्गों का सौष्ठव कहा गया है उसको सिद्धि के लिए परिकर सामग्री बतलाते हैं—'व्यायाममिति' । व्यायाम' पद का अर्थ है —अङ्गविषयक शिक्षा तथा अभ्यास के योग्य काल, जिसके परिणाम स्वरूप द्रुत, मध्य और विलम्बित आदि तथा चञ्चत्पुट आदि के अनुसन्धान से स्वीकृत ताल नामक अङ्ग का पठन करते हैं ॥ ८९ ॥

अनुवाद—इस प्रकार वर्तना के क्रम से संयोजित 'सौष्ठव' का लक्षण कहा गया है । क्योंकि नाट्य की सारी शोभा सौष्ठव पर ही आधारित है ॥ ९० ॥

अनुवाद—जिसमें गात्र न तो चञ्चल हो, न कुबड़े हों और न सन्न अर्थात् स्तब्ध हों, तथा जिसमें पैर न अधिक ऊँचे हों और न अधिक झुके हुए हो, ऐसे सौष्ठवाङ्ग का प्रयोग करना चाहिए ॥ ९१ ॥

अभिनव—सन्न का अर्थ है विश्रान्ति (थकावट) से परिणत अर्थात् थक गया है गात्र (शरीर) जिसका ॥ ९१ ॥

---

१. अयं श्लोकः क (टि०) ज. झ. ड. ढ. न. प. फ. म. इत्यादि पुस्तकेषु नास्ति ।

२. ग. सन्नगात्रं तथैव च ।

कटी कर्णसमा यत्र कूर्परांऽसशिरस्तथा[1] ।
समुन्नतमुरश्चैव सौष्ठवं नाम तद्भवेत् ॥ ९२ ॥
नहि सौष्ठवहीनाङ्गः शोभते नाट्यनृत्तयोः[2] ।
अत्र नित्यं प्रयत्नो हि विधेयो मध्यमोत्तमैः ।
नाट्यं नृत्तं च सर्वं हि सौष्ठवे संप्रतिष्ठितम् ॥ ९३ ॥

---

कर्पूरांसशिर इति प्राण्यङ्गत्वादेकवद्भावः । तथेति साम्येनेत्यर्थः ॥ ९२ ॥
अधमानामत्र स्वातन्त्र्यं दर्शयति—मध्यमोत्तमैरिति ॥ ९३ ॥

---

अनुवाद—जहाँ पर कटि कर्ण ( पतवार ) के समान हो और कुहनी, कन्धें तथा शिर भी वैसा ही हो और वक्षःस्थल समुन्नत ( ऊपर उठा हुआ ) हो तो वह 'सौष्ठव' कहलाता है ॥ ९२ ॥

अभिनव—'कूर्परांसशिरः' में कूर्पर, अंस और शिर आदि बहुत अङ्ग होने से बहुवचन होना चाहिए था, किन्तु प्राणो का अङ्ग होने के कारण एकबद्भाव होने से इसमें एकवचन हुआ है ॥ ९२ ॥

विमर्श—यहाँ 'कर्ण' का अर्थ पतवार ( नौका का पतवार ) भी होता है । जिस प्रकार नौका का आधार पतवार है उसी प्रकार करणों एवं अङ्गहारों का आधार 'कटि' है । 'कर्ण' का एक अर्थ त्रिभुज रेखा' भी है अर्थात् जहाँ पर कटो त्रिभुज रेखा के समान झुकी हुई हो । क्योंकि हाथ को कमर पर रखने से कटि, कन्धा और कोहनी तीनों त्रिभुजाकार हो जाते हैं । संगीतरत्नाकर में 'कटिः कर्णसमा' के स्थान पर 'कटिः जानुसमा' पाठ मिलता है ॥ ९२ ॥

अनुवाद—नाट्य और नृत्त में सौष्ठव से रहित अङ्ग शोभित नहीं होता । इसलिए उत्तम और मध्यम पुरुषों को सौष्ठव में नित्य प्रयत्न करना चाहिए । क्योंकि नाट्य और नृत्त सभी सौष्ठव में प्रतिष्ठित हैं ॥ ९३-९४ (१) ॥

अभिनव—यहाँ उत्तम और मध्यमों के साथ व्यवहार करने में अधमों की स्वतन्त्रता दिखाते हैं ॥ ९३ ॥

---

१. ख. कूर्परोऽस्थितस्तथा ।
२. क-म. नाटके शोभते नचा ।

कटीनाभिचरौ[1] हस्तौ वक्षश्चैव समुन्नतम् ।
वैष्णवं स्थानमित्यङ्गं[2] चतुरस्रमुदाहृतम् ॥ ९४ ॥
परिमार्जनमादानं सन्धानं[3] मोक्षणं तथा ।
[4]धनुषस्तु प्रयोक्तव्यं करणं तु चतुर्विधम् ॥ ९५ ॥

---

सौष्ठवं यदर्थं तत्सर्वसामान्यभूतं चातुरश्र्यमाह—कटीनाभिचराविति क्रमेण यौगपद्येन च ॥ ९४ ॥

खड्गयुद्धे यथान्यायास्तथा धनुर्युद्धेऽपि कर्माणि सन्तीति दर्शयति परिमार्जनमिति ।

---

अभिनव—जिसके लिये 'सौष्ठव' का विधान है उस सर्वसामान्य चतुरस्रता को कहते हैं—

अनुवाद--जहाँ पर दोनों हाथ कटि और नाभि पर सञ्चरणशील हो और वक्षःस्थल समुन्नत ( उठा हुआ ) हो तथा वैष्णय नामक स्थानक हो वह 'अङ्ग' चतुरस्र कहलाता है ९४ ॥

अभिनव—दोनों हाथ कटि और नाभि प्रदेश पर क्रमशः और एक साथ भी घूमते हैं ॥ ९४ ॥

अभिनव—खड्गयुद्ध में जिस प्रकार न्याथ का विधान बताया गया है धनुर्युद्ध में भी उसी प्रकार के कर्म होते हैं, इस बात को दिखाते हुए कहते हैं—'परिमार्जनमिति'।

अनुवाद—परिमार्जन, आदान, सन्धान और मोक्षण इन चार प्रकार के करणों को धनुष के प्रसङ्ग में प्रयोग करना चाहिए ॥ ९५ ॥

---

१. क–म. कटिवक्षश्चरौ । ख. कटिनाभिचरौ ।
२. ग. वैष्णवं स्थानमित्यङ्गचतुरस्रमुदाहृता ।
क–म. वैष्णवं च तथा स्थानमङ्गं स्तु चतुरं भवेत् ।
३. क–ङ. बन्धनं ।
४. ख. धनुषस्तु प्रकर्तव्यम् । क–म. धनुषः संविधातव्यम् ।

[1]संमार्जनं परामर्श आदानं ग्रहणं क्रिया ।
सन्धानं शरविन्यासो विक्षेपो मोक्षणं भवेत् ॥ ९६ ॥
तैलाभ्यवतेन गात्रेण यवागूमृदितेन[2] च ।
व्यायामं कारयेत् श्रीमान् भित्तावाकाशिके तथा[3] ॥ ९७ ॥
योग्यायां मातृका भित्तिस्तस्माद्भित्ति समाश्रयेत् ।
[4]भित्तौ प्रसारिताङ्गन्तु व्यायामं कारयेन्नरम्[5] ॥ ९८ ॥

---

प्रथमं धनुषो मार्जनं ततोऽपि बाणस्य ग्रहस्ततोऽपि शरस्य सन्धानं ततो मोक्षः ॥ ९५ ॥

व्यायामे प्रस्तुते तदुपयोगि सौष्ठवं तत्प्रसङ्गगतं च धनुः कर्माभिधाय प्रयोगमेव व्यायाममाह—तैलाभ्यक्तेनेति ।

तैलमत्र तिलतैलम् । यवागूर्यवान्नम् ॥ ९७ ॥

---

अनुवाद—इनमें परिमार्जन का अर्थ है परामर्श करना अर्थात् धनुष का शोधन अर्थात् धनुष को स्वच्छ (साफ) करना और धनुष को ग्रहण करना ( उठाना ) आदान है । बाण का धनुष पर चढ़ाना 'सन्धान' है और बाण का छोड़ना 'मोक्षण' है ॥ ९६ ॥

अभिनव—पहिले धनुष का मार्जन अर्थात् शोधन होता है । फिर बाण को ग्रहण किया जाता है । उसके बाद बाण का धनुष पर सन्धान किया जाता है, (चढ़ाया) जाता है । फिर अन्त में बाण का मोक्षण (छोड़ना) होता है ॥ ९६ ॥

अभिनव—व्यायाम के उपयोगी सौष्ठव और उसके प्रसङ्गगत धनुष के कर्मों को कहकर अब प्रयोग रूप व्यायाम को कहते हैं—'तैलाभ्यक्तेनेति' ।

अनुवाद—अभिनेता को शरीर में तेल का मालिश करके और जौ के आंटे का उबटन लगाकर भूमि पर अथवा ऊपर खुली जगह में व्यायाम करना चाहिए ॥९७॥

अभिनव—यहाँ पर तैल का अर्थ तिल का तेल है और 'यवागू' पद का अर्थ यव ( जौ ) का चूर्ण ( आँटा ) है ॥ ९७ ॥

---

१. क. प्रमार्जनं । क–क. च. द. भ. पुस्तकेषु एष श्लोको नास्ति ।
२. ख. यवाग्वास्वेदितेन च ।  ३. क–ङ. हितावाकाशिके तथा ।
४. क. भित्तिप्रसारिताङ्गस्तु । ग. भित्तौ प्रसारितायां तु ।
५. ख. बुधा ।

बलार्थं च निषेवेत नस्यं बस्तिविधिं [1]तथा ।
[2]स्निग्धान्यन्यानि च तथा रसकं पानकं तथा ॥ ९९ ॥
[3]आहारेऽधिष्ठिताः प्राणाः प्राणे योग्याः प्रतिष्ठिताः ।
[4]तस्माद्योग्याप्रसिध्यर्थमाहारे यत्नवान् भवेत् ॥ १०० ॥

---

नस्यं वस्तिविधिश्च तैलघृतादिभिः यथादेशकालप्रकृतीति मन्तव्यमायुर्वेदात् रसकमिति मांसरसं सेवेतेति संबन्धः । पानकानि च स्निग्धानीति सम्बन्धः । योग्या वा ॥९९॥

किमनेनेत्याशङ्क्याह—आहारेऽधिष्ठिता इति ॥ १०० ॥

---

**अनुवाद**—योग्या अर्थात् व्यायाम के अभ्यास में भूमि-विशेष उपकारिणी है, इसलिए व्यायाम में भूमि का आश्रय लेना चाहिए और भूमि पर शरीर को फैलाकर मनुष्य को व्यायाम करना चाहिए ॥ ९८ ॥

**अनुवाद**—बल के संग्रह के लिए नस्य और वस्ति विधि का सेवन करना चाहिए । स्निग्ध अन्न ( भोज्य पदार्थ ) तथा मांस एवं फलों का रस सेवन करना चाहिए ॥९९॥

**अभिनव**— नस्य' का अर्थ है नासिका के द्वारा औषधि सेवन करना । 'वस्ति' का अर्थ है शोधन की विधि ( अंग्रेजी में एनिमा ) । इन्हें देश, काल और प्रकृति के अनुसार तेल, घृत आदि के द्वारा सम्पन्न करना चाहिए । आयुर्वेद से विशेष समझना चाहिए । 'रसक' का अर्थ है तरल पदार्थ । 'रसक' पद का अभिप्राय है मांस रस का सेवन करना । 'पानक' का अर्थ है 'स्निग्ध' पदार्थ । 'योग्या' का अर्थ अभ्यास है ॥९९॥

**अभिनव**—इसके सेवन से क्या लाभ है ? इस प्रकार आशङ्का करके कहते हैं —'आहाराधिष्ठिताः' इत्यादि ।

**अनुवाद**—क्योंकि प्राण आहार पर आश्रित है और प्राणों पर अभ्यास निर्भर है । इसलिए अभ्यास ( युद्धाभ्यास या व्यायामाभ्यास ) की सिद्धि के लिए आहार के विषय में पूर्णरूप से प्रयत्न करना चाहिए ॥ १०० ॥

---

१. ख. नस्यं च त्रिविधं नरः ।
२. ग. स्निग्धान्यन्नान्यभीष्टानि । क-न. स्निग्धान्यन्नान्वभीष्टानि ।
३. क-ग. आहाराधिष्ठिताः प्राणाः ।
४. क-न. यस्माद् योग्यप्रतिष्ठार्थं ।

अशुद्धकायं [1]प्रक्लान्तमतीवक्षुत्पिपासितम् ।
[2]अतिपीतं तथा भुक्तं [3]व्यायामं नैव कारयेत् ॥ १०१ ॥
अचलैर्मधुरैर्गात्रैश्चतुरस्रेण वक्षसा ।
व्यायामं कारयेद्धीमान् नरमङ्गक्रियात्मकम्[4] ॥ १०२ ॥

---

अचलैरिति यत्र यत्र क्रियायां योज्यते तत्र तत्रैव प्राप्तपरिणतिभिरित्यर्थः । मधुरैरिति ललितैः अङ्गक्रिया अङ्गसिद्धिः ॥ १०२ ॥

अशुद्धकायमित्यनेन वामनपिरेचनविशुद्धगात्रस्य व्यायामेऽधिकार इति दर्शयति । अशुद्धगात्रत्वं चाजीर्णयोगेऽपि । प्रक्लान्तमिति अध्वश्रमादिना ॥ १०१ ॥

---

अनुवाद—जिसका शरीर स्वच्छ न हो, थके हुए व्यक्ति, भूख प्यास से व्याकुल और अधिक खाना खाये हुए तथा अधिक पानी पिये हुए व्यक्ति को व्यायाम नहीं करना चाहिए ॥ १०१ ॥

अभिनव—'अशुद्धकायम्' पद से यह दिखाया गया है कि वमन, विरेचन से शुद्ध शरीर वाले व्यक्ति को व्यायाम का अधिकार है। शरीर की अशुद्धि भोजन के अजीर्ण होने पर भी होती है। 'प्रक्लान्त' का अर्थ है जो श्रम से थक गया हो ॥ १०१ ॥

अनुवाद—जिसका शरीर अचल (दृढ़) एवं मधुर (सुन्दर) हो और वक्षःस्थल चतुरस्र (चौड़ा) हो ऐसे बुद्धिमान् मनुष्य को अङ्ग क्रिया (अङ्ग-सिद्धि) रूप व्यायाम को करना चाहिए ॥ १०२ ॥

अभिनव—'अचलैः' पद से अभिप्राय है कि जिस कार्य में व्यायाम से दृढ़ शरीरवाले पुरुष को नियोजित किया जाता है वहीं वहीं फल की प्राप्ति होतो है। 'मधुरैः' का अर्थ है 'ललित'। 'अङ्गक्रिया' का अर्थ अङ्गसिद्धि है ॥ १०२ ॥

---

१. ग. प्रक्लान्तमधीरं ।
२. क-न. अतिभुक्तं तथा पीतं ।
३. क-ङ. व्यायामे ।
४. क. क्रियार्थिनम् ।

एवं व्यायामसंयोगे[1] कार्यश्चारीकृतो[2] विधिः ।
अत [3]ऊर्ध्वं प्रवक्ष्यामि मण्डलानां [4]विकल्पनम् ॥ १०३ ॥

इति भारतीये नाट्यशास्त्रे चारीविधानो[5] नाम
दशमोऽध्यायः ।

---

एवमित्युपसंहरन्नध्यायान्तरमासूत्रयति ।

विकल्पनं विचित्रतया कल्प्यन्ते येन प्रकारेण तं वक्ष्यामीति सूत्रयन्नङ्गानुसारायातचारीपरम्परात्मनां मण्डलात्मनामसङ्ख्येयत्वं सूत्रयन्नु-दाहरणमात्रार्थमध्यायान्तरमिति निरूपयतीति शिवम् ॥ १०३ ॥

---

अभिनव—इस प्रकार प्रकृत का उपसंहार करते हुए अगले अध्याय की वस्तु का सूत्ररूप में उपस्थापन करते हैं—

अनुवाद—व्यायाम के संयोजन में चारीकृत विधियों को करना चाहिए। अब इसके बाद मण्डलों के प्रकारों का वर्णन करूँगा ॥ १०३ ॥

इस प्रकार भरतमुनि कृत नाट्यशास्त्र में चारी-विधान नामक दशम अध्याय समाप्त हुआ ॥ १० ॥

इस प्रकार डा० पारसनाथद्विवेदी कृत नाट्यशास्त्र के हिन्दी अनुवाद में दशम अध्याय समाप्त हुआ ॥ १० ॥

अभिनव—'विकल्पन' का अर्थ है विचित्रता के साथ जिस प्रकार से कल्पना करनी हैं उसे कहूँगा। इस प्रकार सूचित करते हुए अङ्गों के अनुसार प्राप्त चारी परम्परा स्वरूप मण्डलों का असङ्ख्येयत्व को सूचित करते हुए केवल उदाहरण के लिए अगले अध्याय को प्रारम्भ करते हैं ? इस प्रकार निरूपण करते हैं ॥ १०३ ॥

---

१. क-म. व्यायामसम्पत्तौ ।
२. क-म. चारीगतो ।
३. क-म. अतः परं ।
४. क-म. खण्डमण्डललक्षणम् ।
५. क-द. विकल्पनं नामैकादशोऽध्यायः ।

इत्थं दशममध्यायं व्याचष्टे च समासतः ।
शिवस्मृतिकृतार्थोऽपि परार्थं दुःखलात्मजः ॥

इति श्रीमहामाहेश्वराभिनवगुप्ताचार्यविरचितायां नाटयवेद-
विवृतावभिनवभारत्यां चारीविकल्पो नाम दशमोऽध्यायः ।

**अभिनव**—इस प्रकार शिव के स्मरण से कृतार्थ होते हुए भी दुःखल के आत्मज अभिनवगुप्तपादाचार्य ने दूसरों के ज्ञान के लिए संक्षेप में दशम अध्याय का व्याख्यान किया है ॥

इस प्रकार महामाहेश्वर अभिनवगुप्तविरचित नाटचवेद की विवृति अभिनवभारती
में चारी-विधान नामक दशम अध्याय समाप्त हुआ ॥ १० ॥

इति डा० पारसनाथद्विवेदिविरचितायामभिनवभारत्या मनोरमाख्यायां
हिन्दी-व्याख्यायां चारीविधानविवेचनं नाम दशमोऽध्यायः ॥ १० ॥

इस प्रकार डा० पारसनाथ द्विवेदी कृत नाटचशास्त्र और अभिनवभारती की
हिन्दी व्याख्या में दशम अध्याय समाप्त हुआ ॥ १० ॥

## [1]अथ एकादशोऽध्यायः

एताश्चार्यो [2]मया प्रोक्ता यथावच्छस्त्रमोक्षणे ।
चारीसंयोगजानीह[3] मण्डलानि निबोधत ॥ १ ॥

---

### अभिनवभारती

गतिमण्डलवैचित्र्यमासूत्रयति या सदा ।
तथा नेदिष्ठनिर्मात्रीं शक्ति वन्दे महेशितुः ।
स्वल्पेऽपि पाठ्ये न त्याज्यः कोऽध्यायो मया यतः
विभोर्विश्वात्मनः स्तोत्रं मुख्यमन्यत्प्रसङ्गतः ॥

---

### एकादश अध्याय

अनुवाद -मैने शस्त्रों के मोक्षण के प्रसङ्ग में इन चारियों का विधानानुसार वर्णन किया है। अब इस अध्याय में इन चारियों से बनने वाले बनने वाले मण्डलों को समझिये ॥ १ ॥

### अभिनव-भारती

अभिनव —जो शक्ति गतियों और मण्डलों को विभिन्नता को सदा आसूत्रित करती है। अत्यन्त समीप में निर्माण करनेवाली महेश (शिव) की उस शक्ति की मैं वन्दना करता हूँ।

अभिनव—पाठ्य-तत्त्व के स्वल्प होने पर भी किसी अध्याय को मैं छोड़ नहीं सकता, क्योंकि विश्वात्मा अखिल ब्रह्माण्ड रूप विभु (व्यापक) स्तोत्र (स्तुति) मुख्य है। अन्य बात तो प्रसङ्गतः निरूपण करते हैं ॥

---

१. ख. पुस्तके द्वादशोऽध्यायः ।
२. क म. यथान्यायं मयोक्ता ।
३. क-द. संयोजनानीह ।

अतिक्रान्तं विचित्रं च तथा ललितसञ्चरम् ।
[1]सूचीविद्धं दण्डपादं विहृतालातके तथा ॥ २ ॥
[2]वामबन्धं सललितं क्रान्तञ्चाकाशगानि च ।
[3]मण्डलानि द्विजश्रेष्ठाः ! भूमिगानि निबोधत ॥ ३ ॥

---

शस्त्रमोक्षणे मण्डलानीति सम्बन्धः । इहेत्यस्मिन्नध्याये श्रुते श्रुततद्दिशान्यान्यपि निबोधत । एषामियत् सामान्यलक्षणं चारीसंयोगजानीति ॥ १ ॥

---

अभिनव—शस्त्रों के मोक्षण के प्रसङ्ग में मण्डलों को समझें, यह सम्बन्ध है । 'इह' पद का अभिप्राय है इस अध्याय में । श्रुत अर्थात् श्रवण करने से श्रुत ( ज्ञात ) पदार्थो के अनुसार अन्य मण्डलों को भी इसी प्रकार समझना चाहिए, क्योंकि 'चारियों के संयोग से मण्डल बनते हैं' । यह इन मण्डलों का सामान्य लक्षण बतलाया गया है ॥ १ ॥

विमर्श—नाट्यशास्त्र में 'चारियों के संयोग से मण्डलों की निष्पत्ति होती है' यह मण्डल का लक्षण बतलाया गया है । अभिनयदर्पण में पादाभिनय के अन्तर्गत मण्डल को एक पादभेद माना है । नाट्यशास्त्र में दस आकाशगामी और दस भूमिगत मण्डलों का निरूपण किया गया है । युद्ध, नियुद्ध तथा परिक्रमण आदि के अभिनय में इन मण्डलों का प्रयोग किया जाता है ॥ १ ॥

**अनुवाद—अतिक्रान्त, विचित्र, ललित, सञ्चर, सूचीविद्ध, दण्डपाद, विहृत, अलातक, बामबन्ध, ललित तथा क्रान्त ये दस आकाशगामी मण्डल हैं । हे द्विजश्रेष्ठों ! अब भूमिगत मण्डलों को समझिये ॥ २-३ ॥**

---

१. ख. ग. सूचीविद्धं दण्डपादविहृतालातके तथा ।
क-म. सूचीविद्धं दण्डपादं विहृतालातसंज्ञिते ।

२. क. बामविद्धं ।

३. ख.ग. पुस्तकयोरयं श्लोकार्धो नास्ति ।

[1]भ्रमरास्कन्दिते स्यातामावर्तं च ततः परम् ।
[2]समाक्रन्दितमप्याहुरेडकाक्रीडितं[3] तथा ॥ ४ ॥
अड्डितं शकटास्यं च तथाऽध्यर्धमेव[4] च ।
[5]पिष्टकुट्टं च विज्ञेयं तथा चाषगतं पुनः ॥ ५ ॥
[6]एतान्यपि दशोक्तानि भूमिगानीह नामतः ।
अतः परं प्रवक्ष्यामि लक्षणानि यथाक्रमम् ॥ ६ ॥
[7]आद्यं पादं च जनितं कृत्वोद्वाहितमाचरेत् ।
अलातं वामकं चैव पार्श्वक्रान्तं च दक्षिणम् ॥ ७ ॥

---

आकाशगतानां युद्धपरिक्रमेषु प्राधान्यात्पूर्वमुद्देशः आकाशभूचारीप्राचुर्यान्मण्डलेषु तथात्वम् ॥ २-५ ॥

---

अनुवाद—भ्रमर, आस्कन्दित, आवर्त्त, समोत्सारित, एड़काक्रीडित, अड्डित शकटास्य, अध्यर्धक, पिष्टकुट्ट, और चाषगत ये दस भूमिगत मण्डलो के नाम हैं। इसके बाद मैं क्रमशः इनके लक्षणों को कहूँगा ॥ ४-६ ॥

अभिनव—आकाशगत मण्डलों का युद्ध के परिक्रमण अर्थात् युद्ध के अभिनय में प्रधानता होने से पहिले आकाशचारी मण्डलों का उल्लेख किया गया है। बाद में भूचारी मण्डलों का कथन किया गया है। आकाशगत चारियों और भूमिगत चारियों की प्रचुरता से वर्णन होने के कारण मण्डलों की भी प्रचुरता से वर्णन किया गया है अर्थात् आकाशचारियों और भूमिचारियों की संख्या अधिक होने के कारण मण्डलों को भी इतनी संख्याओं का निर्देश किया है ॥ २-६ ॥

---

१. क-न. भ्रमरास्पन्दिते ।
२ क. समोत्सारितमप्याहुः । क-न. समोत्सारितमित्याहुः ।
३. क-द. एलकाक्रीडितं ।
४. क-द. अध्यर्धमिति स्मृतम् ।
५. क-न. म. पृष्ठकुट्टं ।
६. ख. भूमिकामण्डला ह्येते लक्षणं च निबोधत ।
ग. पुस्तकेऽयं श्लोको नास्ति ।
७. ख. आद्यपादं तु तं कृत्वा उद्वाहितमथाचरेत् ।

[1]सूचीवामं पुनश्चैव पार्श्वक्रान्तं च दक्षिणम् ।
[2]सूचीं वामक्रमं दद्यादपक्रान्तं च दक्षिणम् ।
[3]सूचीवामं पुनश्चैव त्रिकं च परिवर्तयेत् ॥ ८ ॥
तथा दक्षिणमुद्वृत्तमलातञ्चैव वामकम् ।
परिच्छन्नं तु कर्त्तव्यं बाह्यभ्रमरकेण हि ॥ ९ ॥
अतिक्रान्तं पुनर्वामं दण्डपादञ्च[4] दक्षिणम् ।
[5]विज्ञेयमेतद् व्यायामे त्वतिक्रान्तं तु मण्डलम् ॥ १० ॥

---

आद्यमिति दक्षिणम् । उद्वाहितमिति लक्षणैकदेशेन शकटास्यां सूचयति । एवमन्यत्र । त्रिकमिति भ्रमरीमाह । बाह्य भ्रमरकेण वामपादेन ॥ ९ ॥

---

**अभिनव**—'आद्य' का अर्थ है दाहिना पैर। 'उद्वाहित' यह पद लक्षणैकदेश न्याय से 'शकटास्या' चारी को सूचित करता है। इसी प्रकार अन्यत्र भी समझना चाहिए। 'त्रिक' पद से भ्रमरी चारी को कहा गया है। बायें पैर से बाह्यभ्रमरक का अभिनय करे ॥ ७-१० ॥

### १. अतिक्रान्त मण्डल

**अनुवाद**—पहिले दाहिने पैर को जनिता चारी में अवस्थित करके उद्वाहित करे, फिर बायें पैर को अलाता चारी और दाहिने पैर को पार्श्वक्रान्ता चारी में प्रदर्शित करे। फिर बायें पैर को सूची चारी में और दाहिने पैर को पार्श्वक्रान्ता-चारी में रखे। फिर बायें पैर को सूची चारी में रखकर दाहिने पैर को अपक्रान्ता चारी में अवस्थित करे। फिर बायें पैर को सूची चारी में अवस्थित कर त्रिक का परिवर्त्तन करे। फिर दाहिने पैर को उद्वृत्त करके बायें पैर से अलाता चारी का प्रयोग करे। फिर बाह्य भ्रमरक के द्वारा परिच्छिन्न ( परिवर्त्तित ) करना चाहिए। इसके बाद बायें पैर को अतिक्रान्ताचारी में रखकर दाहिने पैर से दण्डपादा चारी का प्रदर्शन करे। इस प्रकार व्यायाम में अतिक्रान्त मण्डल को समझना चाहिए ॥ ७-१० ॥

---

१. ख. ग. सूचीपादं। केषाञ्चिन्मते प्रक्षिप्तोऽयं श्लोकः। वस्तुतः न प्रक्षिप्तोऽयं श्लोकः, किन्तु मतान्तरानुसार्येव। मण्डलगतानां चारीणामभ्यावृत्तौ न्यूनाधिकता न दोषाय।
२. क. सूची वामपदं। ३. ख-ग. सूचीपादं।
४. क-न. मन्दपादं। ५. ख. म. पुस्तकयोरितः परं श्लोकद्वयं नास्ति।

आद्यं तु जनितं कृत्वा तेनैव च निकुट्टकम्[1] ।
[2]आस्पन्दितं तु वामेन पार्श्वक्रान्तं च दक्षिणम् ॥ ११ ॥
वामं सूचीपदं दद्यादपक्रान्तञ्च दक्षिणम् ।
भुजङ्गत्रासितं वाममतिक्रान्तं च दक्षिणम् ॥ १२ ॥
[3]उद्वृत्तं दक्षिणं चैवाऽलातं चैवात्र वामकम् ।
[4]पार्श्वक्रान्तं पुनः सव्यं सूचीवामक्रमं तथा ॥ १३ ॥
विक्षेपो दक्षिणस्य स्यादपक्रान्तं च वामकम्[5] ।
[6]बाह्यभ्रमरकञ्चैव विक्षेपञ्चैव योजयेत् ॥ १४ ॥
विज्ञेयमेतद्वयायामे विचित्रं नाम मण्डलम् ।

## २. विचित्र मण्डल

अनुवाद—पहिले दाहिने पैर को जनिता चारी में रखकर फिर उसी से निकुट्टन करे । इसके बाद बायें पैर से स्पन्दिता चारी का प्रयोग करके दाहिने पैर से पार्श्वक्रान्ता चारी का प्रदर्शन करे । फिर बायें पैर को सूची चारी में रखकर दाहिने पैर से अपक्रान्ता चारी का प्रयोग करे । फिर बायें पैर को भुजङ्गत्रासिता चारी में अवस्थित कर दाहिने पैर को अतिक्रान्ता चारी में रखे । फिर दाहिने पैर से उद्वृत्ता चारी और बायें पैर से अलाता चारी का प्रदर्शन करे । फिर दाहिने पैर को पार्श्वक्रान्ता चारी तथा उसी क्रम में बायें पैर को सूची चारी में रखे । फिर दक्षिण पैर को विक्षेप करके बायें पैर को अपक्रान्ता चारी में रखे । फिर बाह्यभ्रमरक और विक्षेप की योजना करे । इस प्रकार व्यायाम में से 'विचित्र' मण्डल समझना चाहिए ॥ ११-१४ ॥

१. क. निकुट्टनं ।
२. क-न. म. आस्कन्दितं ।
३. ख. उद्धृतं दक्षिणं चैव अलातं चैव वामकम् ।
उद्धृतं दक्षिणञ्चैव ह्यलातं चैव वामकम् ।
क-म. उद्वृत्तो दक्षिणश्चैव अलातश्चैव वामकः ।
४. क-म. पार्श्वाक्रान्तं ।
५. क-म. वामतः ।
६. ग. पुस्तकेऽयं श्लोको नास्ति ।

